धातुमात्रस्योपधायाश्च ऊत्स्यात् ।

स्थानेयोगेति । 'स्थानेन योगो यस्या' इति विग्रहः । निपातनाद्व्यधिकरणबहुव्रीही । नच 'स्थानं योगः संबन्धो यस्या वाच्य'इत्यर्थकसमानाधिकरणबहुव्रीहिरेवाऽस्त्विति वाच्यम् । स्थानरूपसम्बन्धस्य षष्ठ्यर्थत्वाऽभावात् । स्थाननिरूपितसम्बन्धस्यैव तदर्थत्वात् । ( स्थानेन = स्थानशब्देन योग इति तदर्थः । ) इदमेवध्वनयितुं भगवता व्यधिकरणबहुव्रीहिरेव दर्शितः । 'एकशतं षष्ठ्यर्था' इत्यस्याऽपि तन्निरूपका अनन्ता इत्यर्थः । निरूपकभेदे तद्भेदोऽपि फलित एव । 'अस्तेरनन्तरे, समीपे वे'त्यादि भाष्यस्याऽपि 'अनन्तरादिनिरूपितसम्बन्धे' इत्येवाऽर्थः ।

एतेन मतुप्सूत्रस्थभाष्यप्रामाण्येन सामीप्याऽऽनन्तर्ययोः षष्ठ्यर्थत्वाऽभावादिदमसङ्गत'मित्यपास्तम् ।

प्रसङ्ग इति । दर्भाणां स्थाने शरैःप्रस्तरितव्यमित्यादौ तथा दर्शनात् । भावल्युडन्तश्च स्थानशब्दः । तथा'चेको यणि'त्यादेरिगुच्चारणप्रसङ्गे यणुच्चारणीय इत्यर्थः । प्रसङ्गश्च सति सम्भवेऽर्थवत एव । अर्थप्रत्यायनार्थं शब्दप्रयोगात् । एवं च 'एरु'रित्यादे''स्तेस्तु'रितिफलितोऽर्थः । 'तेन सर्वे सर्वपदादेशा' इति सिद्धम् । चिलसिच्स्थलेऽपि द्योत्याऽर्थेनाऽर्थवत्ताऽस्त्येवं । (च्ल्यादेरनर्थकत्वमेवेतिसिद्धान्ते तु वक्ष्यमाणरीत्ये'को-

१ 'योगस्तद्रूपः सम्बन्धो ।' ख. पाठः । २ क. ग. पाठः ।

३ इतोऽग्रे–'न च शब्दनित्यताहानिः । तत्तच्छब्दज्ञाननिष्ठोत्पादविनाशयोर्विषये आरोपेण, रेखागवयन्यायेन शास्त्रस्य सत्वेन च वस्तुतस्तदुपपत्तेः । इको यणित्यादौ त्वगत्याऽनर्थकयोरपि सः । वस्तुतस्तत्राप्यच्परेकारघटितशब्दस्याऽर्थे तत्परयकारघटितः प्रयोक्तव्य' इत्येवाऽर्थः । नच यः कश्चिद्यकारघटितः स्यात् । विधेयाऽन्यश्रूयमाणवर्णत्यागे मानाऽभावात् । तदर्थबोधनाऽसमर्थत्वाच्च ।' ख. पाठः ।

४ क. ग. पाठः । ख. नास्ति ।

यणचो'त्यादिवद्बोध्यम् । अत एव न शब्दनित्यताहानिः । 'इको यणि'त्यादावपि 'अच्परेकारघटितशब्दस्याऽर्थबोधनाय प्रसङ्गे तत्परयकारघटितः प्रयोक्तव्य' इत्यर्थः फलति )।

साक्षादवयवानामेव षष्ठीनिर्दिष्टत्वेन, विधेयत्वेन च तेषामपि स्थान्यादेशभावोऽक्षत एव । अत एवा'ऽचः परस्मिन्नि'त्यादि सङ्गच्छते ।

**स्थानेऽन्तर** । 'षष्ठी'त्यनुवृत्त्या 'यत्र स्थानषष्ठी तत्रेदमुपतिष्ठते' इति बोध्यम् । तेन विधिवाक्यैकवाक्यतयाऽस्य नियामकत्वं, न तु विहितानां नियमः । 'भुक्तवन्त'मिति न्यायेनाऽसम्भवात् । फलिताऽर्थमाह—**प्रसङ्ग** इति ।

**सदृशतम** इति । अर्थात्प्राप्यमाणानां मध्ये एव । अत एव 'गङ्गोदक'-मित्यत्र त्रिमात्रो न । तमब्ग्रहणं किम् ? । 'वाग्घरि'रित्यत्र महाप्राणत्व-साम्येन जायमानः पूर्वसवर्णो वर्गद्वितीयोऽपि मा भूत् । किन्तु नादवान् महाप्राणश्चतुर्थो घ एव यथा स्यादिति ।

यत्तु–'तन्त्राऽऽदिना 'स्थानेऽन्तरमे' इति सप्तम्यन्तपाठमपीच्छन्ति[1], तत्तु 'इको यणची'त्यादौ दोषस्य स्फुटत्वादयुक्तम् ।

(अत[2] एव न भूसुधियो'रिति चरितार्थम् । अन्यथा दीर्घाणां यणप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेति भाष्ये स्पष्टम् ) । **यत्राऽनेक** इति । स्थानाऽर्थ-गुण-प्रमाणकृतमित्यर्थः । (प्रमाणस्योक्तरीत्या[3] गुणत्वेऽपि, गोबलीवर्दन्यायेन पृथङ् निर्देशः । विवारादीनां बाह्यानां साक्षाद्वर्णाऽवृत्तित्वेऽप्यौपचारिकं गुणत्वं बोध्यम् ) । गुणशब्देनोक्तत्रितयाऽतिरिक्तधर्ममात्रम् । तेना-ऽनान्तर्यमेवैतयोरान्तर्य'मित्यादि—'स्थानेऽन्तरतम'सूत्राऽऽदिस्थभाष्येण न विरोधः । (अन्तरतमाऽभाववत्त्वमेव[4] गुणविधौ ऋकाराऽकारयोः सादृश्यमिति तदर्थः ) ।

१. 'पाठमिच्छन्ति' ख. पाठः ।  २ क. ग. पाठः ।
३ क. ग. पाठः ।  ४ क. ग. पुस्तकपाठः ।

स्थानत इति। अत्र मानन्तु–'षष्ठी स्थाने' इत्यतः 'स्थाने'ग्रहणेऽनुवर्त्तमाने, पुनः 'स्थाने'ग्रहणमेव। तद्धि वाक्यभेदेन 'प्रसङ्गे जायमानः स्थानत एवाऽन्तरतम' इत्यर्थकम्।

नन्वेवमपि 'प्रसङ्गे[1] स्थानकृताऽऽन्तर्यवा'नित्येव वाक्यार्थोऽस्तु। वाक्यभेदे मानाऽभाव इति चेन्न। तमब्ग्रहणस्यैव मानत्वात्। अन्यथा स्थानकृत एव सादृश्ये गृह्यमाणे, सादृश्याऽन्तराऽभावात्किं तेन ?। इदमेव च सादृश्यान्तर[2]ग्रहणस्याऽपि ज्ञापकम।

तत्र स्थानतः—'इको यणची'ति। अर्थतः—'तृज्वत्क्रोष्टु'रिति। इह 'क्रोष्टु'शब्दस्थाने 'पक्तृ'शब्दो नाऽऽदेशः। किन्तु 'क्रोष्टृ'इत्येव। गुणतस्तु–'वाग्घरि'रित्यादौ मूल एव स्पष्टम्।

एवं पदादय आदेशा वर्णसाम्यरूपगुणेन पादादीनामेव, न चरणादीनाम्। प्रमाणतस्तु—'अदसोऽसे'रित्यादौ। बलीय इति। तेन 'चेते'त्यादौ प्रमाणत आन्तर्यवान्—अकारो गुणो न।

तस्मिन्निति—न स्वरूपपरम्। उदाहरणाऽभावात्। न च 'तस्मिन्नणि चे' त्येवोदाहरणम्। फलन्तु 'हे यौष्माकीण—अस्मभ्यं देही'त्यादौ ख्यः परस्याऽऽदेशा मा भूवन्निति वाच्यम्। 'एङ्ह्रस्वात्सम्बुद्धे'रित्यादाविवाऽङ्गाऽऽक्षेपे सति, तस्य च निरूपकाऽऽकाङ्क्षायामाक्षेपकख्यणोः सम्बन्धेनाऽदोषात्। तत्रैव कर्त्तुं युक्तत्वाच्च। किन्तु'अची'-त्यादिसप्तम्यन्तार्थकः स्वतन्त्रस्य सर्वनाम्नो निर्देशः। सप्तमी[3] तु—सप्तम्यन्तानामेव तच्छब्दार्थत्व'मिति बोधनाय, (तद्बोध्यार्थस्य[4] 'निर्द्दिष्टे' इत्यनेन सामानाधिकरण्याय च[5])।

---

१ 'प्रसङ्गे' इति ख. नास्ति। २ 'सादृश्यान्तरसत्त्वस्यापि'—ख. पाठः।

३ 'सप्तम्यनुवादिका सप्तम्यन्तानामेव' ख. पाठः। ४ क. ग. पाठः।

५ एतदुत्तरं—'सप्तम्यन्तानामनुकरण'मित्यस्याऽप्यत्रैव तात्पर्यम्। अनुकरणं हि शब्दबोधकम्। तथाऽत्राऽपि सप्तम्यन्तपदबोधकस्तच्छब्द इत्यर्थः' ख. पाठः। क. पुस्तके तु कुण्डलितः। ग. तु नास्ति।

'इति'शब्दः पुनस्तस्य तदर्थपरत्वं बोधयति । अन्यथा 'सप्तम्यन्ते पदेऽव्यवहितोच्चारिते' इत्यर्थः स्यात् । एतेन 'सप्तमीनिर्दिष्टे पूर्वस्ये'ति सूत्रयितुमुचित'मित्यपास्तम् ।

किञ्चैवं 'यत्र सप्तम्यन्तनिर्देश' इत्यर्थे 'नेड् वशी'त्यादौ 'तस्मि'न्नित्यस्याऽऽपत्तिः । यथान्यासे तु तच्छब्दस्य बुद्धिस्थपरामर्शकतया, यत्राऽर्थे सप्तमीविधानं तदर्थकसप्तम्यन्तस्यैव ग्रहणान्न दोषः ।[1]

'निः'शब्दो-नैरन्तर्यपरः । 'दिशि'रुच्चारणक्रियः । एवञ्च 'सप्तम्यन्ताऽर्थेऽव्यवहितोच्चारिते उपश्लिष्टस्य पूर्वस्य कार्य'मिति वाच्योऽर्थः[2][3] ।

एवं च नियमद्वयं फलितम्–'अव्यवहिते एव','पूर्वस्यैवे'ति च । अत एव 'जनपदे लु'बित्यादौ न दोषः । न ह्यर्थ उच्चारितो, नाऽपि शब्दस्य निरन्तरः । अव्यवहितपूर्वपराऽन्यतरस्थत्वं हि निरन्तरत्वम् । अवध्यवधिमतोः साजात्यस्यैवौचित्यात् ।

किञ्चाऽर्थनिर्देशे 'जनपदे यः प्रत्ययः' इत्यन्वयेऽनियमप्रसङ्गाऽभावान्नियमफलायाः परिभाषाया अनुपस्थितिः[4] ।

एवमुत्तरसूत्रे 'तस्मा'दित्यपि बोध्यम् । एतत्सूत्रसाहचर्यात् । अन्यथा तदपि 'तस्माच्छसः' 'तस्मान्नुडची'ति योगद्वये एव स्यात् । 'उच्चरत आन् उपलभते' 'गौरनश्व' इत्यादेर्व्यावर्त्त्यस्य तत्र सम्भवात्[5] ।

---

१ 'यथान्यासे त्वर्थपरत्वादर्थस्य च यत्रार्थे सप्तमीविधानं तस्यैव ग्रहणात्' —ख. पाठः ।

२ 'उच्चारिते सति, ततः पूर्वस्य कार्यम्' ख. पाठः ।

३ इतोऽग्रे—'यत्र सप्तम्यन्तेनाऽर्थनिर्देशः तत्र 'निर्दिष्टे पूर्वस्ये'त्युपतिष्ठते इति वा ।'–इति ख. पाठः ।

४ 'अनुपस्थितिरित्याहुः' । ख. पाठः ।

५ इतोऽग्रे—'तस्मादित्यत्र 'निर्दिष्टे' इति पञ्चम्या विपरिणम्यते इति बोध्यम् ।' —ख. पाठः ।

तथा चैतत्परिभाषाद्वयोपस्थितौ सप्तम्यन्तपदस्य, पञ्चम्यन्तपदस्य च अर्थो लिङ्गमित्याशयेन फलितमाह—सप्तमीति ।

'इको यणची'त्यादौ 'यस्य च भावेने'ति सप्तमी ।

---

१ इतोऽग्रे—'तेनाऽचि सति यण् भवतीत्यर्थ' इति केचित्तन्न । औपश्लेषिकाऽधिकरणसप्तम्यन्तत्वेनाऽवश्याऽऽक्षेप्यप्रधानक्रियाऽन्वये सम्भवति, 'सति' इत्यध्याहारे मानाऽभावात् । किञ्च तदध्याहारसामर्थ्यादस्याः परिभाषाया अप्रवृत्तिरेव स्यात्,'नित्यं ङित' इत्यादौ विहितपदाध्याहारे 'तस्मादित्युत्तरस्य' इत्यस्येव । अत एव तत्रा'ऽऽदेः परस्ये'त्यस्याऽप्रवृत्तिः । व्यवहितेऽपि सलोपश्च । अत एव 'श्नान्नलोप' इति सूत्रे भाष्ये 'नाम्नलोप' इति सूत्रमस्त्वित्याशङ्क्य, नन्दितेत्यत्र दोषः । एवं तर्हि क्ङिति इत्यनुवर्त्तते । एवमपि हिनस्तीत्यत्र न प्राप्नोति । एवं तर्हि नैषा परसप्तमी । का तर्हि । सत्सप्तमी । एवमपि नन्दमाव इत्यत्र प्राप्नोती'त्युक्तं सङ्गच्छते । तस्मादौपश्लेषिकेऽधिकरणे सप्तमी । उपश्लेषश्चेगादिद्वारा परम्परासम्बन्धेन । एवञ्चाऽ'चो'त्यादिसप्तम्यन्तानां यणादिभावनायामेवाऽन्वयः । स्पष्टं चेदं संहितासंज्ञासूत्रे भाष्ये ।

तत्रोपश्लेषः पूर्वस्येव, परस्याऽपीति 'पूर्वस्यैवे'ति नियमार्थमिदम् । तत्र 'पूर्व'शब्देन न भावना । तस्या अर्थरूपत्वेन शब्देन पौर्वापर्याऽसम्भवात् । नाऽपि तद्विशेषणं यणादिकम् । इक्शब्दोत्तरषष्ठीबोधिताऽर्थस्य 'पूर्वस्ये'त्यनेनाऽनुवादे लाघवेन, अयोग्यत्वेन च 'पूर्वस्ये'ति षष्ठ्याऽनन्वयात् । मानाऽन्तरप्राप्ताऽचो लक्ष्यसंस्कारवेलायामविद्यमानविधेययणादिना पौर्वापर्याऽभावाच्च । भाविबुद्ध्याश्रयणे तु न मानम् । किन्तु तद्विशेषणमिगादिकम् । ततोऽधिकन्तु न । मानाऽभावात् ।

इदमेवाऽभिसन्धाय 'विधौ परिभाषा, नाऽनुवादे' इत्युद्घोषः । अत एव 'उदीचामात'इति सूत्रे 'स्थाने' ग्रहणं चरितार्थम् । 'षष्ठी स्थाने'इत्येतत्—साक्षाद्विधेयविशेषणे 'इक' इत्यादौ चरितार्थं, तद्विशेषणे न प्रवर्त्तत । क्वचित्तु—'उदात्तस्वरितयोर्यण' इत्यादौ लक्ष्याऽनुरोधाद्व्याख्यानाच्चा-

अश्रूयमाणक्रियत्वेऽप्यन्तरङ्गत्वादस्त्यर्थलाभः ।

तेनोऽचि सति यण्भवतीत्यर्थे 'पूर्वस्य', 'परस्य वे'त्येवमादिसन्देहे इदमुपतिष्ठते । पूर्वत्वं च—प्रत्यासत्त्या सप्तम्यर्थापेक्षमेवेति केचित्तन्न । 'सप्तम्यन्तार्थेऽव्यवहितोच्चारिते'इत्यर्थे कुतोऽव्यवधानमित्याकाङ्क्षायां 'सप्तम्यन्तार्थाऽन्वय्यर्थापेक्षये'ति प्रत्यासत्त्या लभ्यते । पूर्वापेक्षयाऽव्यवधानग्रहणेऽपि, पूर्वः प्रत्यासत्त्या सप्तम्यन्तार्थाऽन्वय्येव गृह्यते । सत्सप्तम्यां हि विधेययणादिकर्तृकभवतिक्रियान्वयित्वेन। तत्क्रियायास्तत्कर्त्तुश्च विधेयतया। तदपेक्षाऽव्यवधानस्याऽनुवादाऽयोगात् । पूर्वस्येकः सप्तम्यर्थाऽन्वयित्वाऽभावाच्च । मम 'त्वजुपश्लिष्टस्येक' इत्यर्थे सप्तम्यन्तान्वयीगपेक्षयाऽव्यवधानं युक्तं वक्तुम् । 'अचि सति विद्यमानस्येक' इत्यर्थे तु पदद्वयाऽध्याहारे गौरवम् । किञ्चाऽत्र सूत्रे 'निर्दिष्टे' इति सप्तम्यौपश्लेषिकेऽधिकरणे एवोचिता । 'उपपदविभक्ते'रिति न्यायात् ।

तत्र न्याये कारकविभक्तित्वं च–कारकाऽधिकारपठितसंज्ञावदर्थनिमित्तकविभक्तित्वम् । प्रथमाया अपि तिङ्समानाधिकरणे विधानासत्त्वमिति 'तत्र च दीयते' इति सूत्रे भाष्यकैयटयोर्ध्वनितम् । एवञ्च यत्रैवाऽधिकरणे सप्तमी, तत्रैवाऽस्य प्रवृत्तिर्न तु (सत्)सप्तम्याम् । एतदर्थमेव 'निर्दिष्टे पूर्वस्ये'ति भिन्नविभक्तिकनिर्देशश्चरितार्थः । अन्यथा 'सप्तम्यन्तार्थे सति, तदपेक्षयाऽव्यवहितस्य पूर्वस्ये'त्यर्थकं—'निर्दिष्टस्य पूर्वस्ये'त्येव वदेत् ।

यद्वा–'सप्तम्यन्तार्थेऽव्यवहिते परे सति कार्यं भवती'त्यर्थकं 'निर्दिष्टे परे' इति वदेत् । उक्तन्यायादपी'को यणची'त्यादौ सैवोचिता । लक्ष्यानुसारात्तु क्वचित्तन्न्यायत्यागपूर्वकं सत्सप्तम्यपि ।

---

ऽधिकेऽपि प्रवृत्तिः । 'अची'त्यादिकमपि भावनायामेतद्द्वारैव विशेषणम् ।'—इति ख. पुस्तकेऽधिकः पाठः ।

१ क. पाठः । ख. नास्ति । २ पृष्ठ ११७—११८ स्थः पाठः ख. नास्ति ।

'तस्मादित्युत्तरस्ये'ति सूत्रे तु निर्दिष्टपदं निर्दिष्टादिति विभक्तिविपरिणामेनाऽन्वेति। सा चोत्तरस्येति दिग्योगलक्षणेति दिग्योगलक्षणपञ्चम्यामेव तत्प्रवृत्तिः। अत एव 'कर्तृकर्मणोः कृती'त्यत्राऽस्याऽप्रवृत्तिः। सत्सप्तमीसत्त्वात्। 'कृति सति प्रत्यासत्त्या तत्प्रकृत्यर्थकर्तृकर्मणोः षष्ठी'ति तदर्थः।

अत एव 'श्नान्नलोप' इति सूत्रे भाष्ये 'नान्नलोप' इति सूत्रमस्त्वित्याशङ्क्य, नन्दितेत्यत्र दोषः। एवं तर्हि क्ङितीत्यनुवर्त्तते। एवमपि हिनस्तीत्यत्र न प्राप्नोति। एवं तर्हि नैषा परसप्तमी। का तर्हि?। सत्सप्तमी। एवमपि नन्दमान इत्यत्र प्राप्नोती'त्युक्तं सङ्गच्छते।

उत्तरसूत्रस्य च 'विहित'पदाध्याहारेण पञ्चम्यामप्रवृत्तिः। तस्मादौपश्लेषिकेऽधिकरणे सप्तमी, 'उपश्लिष्टस्ये'त्यध्याहारेण। 'अच्युपश्लिष्टस्येक' इत्यन्वयः। उपश्लेषश्च—समीपवृत्तित्वम्। स्पष्टं चेदं 'संहिताया'मित्यत्र भाष्ये। 'शब्दस्य च शब्देन कोऽन्योऽभिसम्बन्धो भवितुमर्हति, अन्यदत उपश्लेषात्। इको यणचि—अच्युपश्लिष्टस्येती'ति हि तत्र भाष्ये उक्तम्।

तथाहि—अचीत्यस्य न कर्त्तृयणादिद्वारा विधेयभावनायामन्वयः। तस्याऽविद्यमानत्वेन तदधिकरणत्वाऽसम्भवात्। कर्तृकर्माऽधिकद्वारकसम्बन्धेनाऽन्वयेनाऽधिकरणत्वे तु न मानम्। तस्मादुपश्लिष्टपदाध्याहारे विधेयविशेषणेऽन्वयः।

इदमेवाऽभिसन्धाय—'विधौ परिभाषा, नाऽनुवादे' इत्युद्घोषः। तत्रोपश्लेषः पूर्वस्येव, परस्याऽपोति 'पूर्वस्यैवे'ति नियमार्थमिदम्। संयोगवत्पूर्वपरयोर्वर्णयोर्बौद्धौपश्लेषिकाऽऽधारत्वस्याऽप्यस्माकं सत्त्वात्।

'क्ङिति चे'त्यादौ तु लक्ष्यानुरोधा'त्सती'ति, 'प्राप्नुत' इति चाऽध्याहार्यम्। तत्र च परिभाषा प्रवृत्तिर्नेत्युक्तम्। तेन 'क्ङिति सति ये गुणवृद्धी प्राप्नुतस्ते ने'त्यर्थः। अन्यथा ह्यव्यवहितक्ङिदुपश्लिष्टस्य पूर्वस्येको गुणवृद्धी न भवत' इत्यर्थापत्तौ 'भिन्न' मित्यादौ निषेधाऽनापत्तिः।

'सती'त्यध्याहारे च 'यस्य च भावेने'ति ज्ञापकत्वाऽर्थिका सप्तमी। ज्ञापकत्वञ्च सम्बन्धं विनाऽनुपपन्नं सद्विधिशास्त्रक्लृप्तनिमित्तत्वमादाय पर्यवस्यति। एवं च 'निमित्ततया क्ङिज्ज्ञाप्या या गुणवृद्धिप्राप्तिः, सा ने'त्यर्थः।

केचित्तु 'क्ङित्सत्तोपलक्षिता या गुणवृद्धिप्राप्तिस्तदभाव' इति वाक्याऽर्थः। एवं च साध्यगुणवृद्धि-सिद्धक्ङितोः समभिव्याहारे 'सिद्ध-साध्ये'तिन्यायेन निमित्तत्वं फलति। 'राहूपरागे स्नाया'दितिवत्। 'क्ङिन्निमित्ते ये गुणवृद्धी'इति तु फलिताऽर्थकथनं, न तु निमित्ततायामस्मच्छास्त्रे सप्तमीविधानमस्तीति भ्रमितव्यमित्याहुः।

( तत्र प्रायेणौपश्लेषिकेऽधिकरणे सप्तमी, क्वचित्तु लक्ष्याऽनुसारात्सति सप्तमीति बोध्यम् )।

अत्र च नियमद्वयं फलति-'सप्तम्यन्तार्थेऽव्यवहिते एव' 'पूर्वस्यैवे'ति च।

---

१ 'सतीत्यध्याहारे चे' त्यतोऽग्रे—'क्ङिति चे'त्यादौ तु 'क्ङिती'त्यस्य साक्षादभावे, क्रियायां वाऽन्वयेन न परिभाषाप्रवृत्तिः। तयोरर्थरूपत्वात्। एतेन 'गुणवृद्ध्योरन्वयेन से'त्यपास्तम्। प्रसक्तस्यैव निषेधात्। विद्यमानत्वेन ( दैशिक- ) पौर्वापर्याऽसम्भवात् ( च )। न च गुणवृद्ध्याक्षिप्तस्थानिन्यन्वयेन परिभाषा दुर्वारेति वाच्यम्। शब्दोपस्थितस्य शब्दोपस्थितेऽन्वये सम्भवत्याक्षिप्तेऽन्वयस्याऽनुचितत्वात्।

न च 'क्ङिति सति पूर्वस्य ये गुणवृद्धी प्राप्नुतस्ते ने'त्यर्थः। प्राप्तिक्रियायाः, सत्तायाश्च निषेध्यक्रियाऽपेक्षयाऽप्राधान्येन, तदन्वये परिभाषाया अप्रवृत्तेः। तत्र च 'यस्य च भावेने'ति ज्ञापकत्वार्थिका सप्तमी'इति—ख. पाठः। क. पुस्तके तु कुण्डलितः। ग. तु नास्त्येव।

२ 'ज्ञाप्ये गुणवृद्धी नेत्यर्थः' ख. पाठः। ३ ख. पाठः। क. ग. नास्ति।

४ 'अत्र च वाक्यद्वयम्। सप्तम्यन्तेऽव्यवहिताऽधिकारबहिर्भूतोदाहरणसम्भवात्'—ख. पाठः।

आद्येन व्यवहितव्यावृत्तिः। 'अव्यवहितस्ये'ति तु फलितार्थकथनम्। न च व्यवहिते संहिताया एवाऽभावः। संहिताऽधिकारबहिर्भूनोदाहरण-सम्भवात्। व्यवधानञ्च न वर्णशून्यकालकृतं व्यावर्त्त्यम्। संहिताऽधिकारबहिर्भूतानां वर्णशून्यकालव्यवाये प्रवृत्तेस्तदधिकारेण बोधनात्। अत एवाऽवग्रहेऽप्यानङादयः।

पूर्वशब्दश्च व्यवहिताऽव्यवहितसाधारणो लोके दृष्टः। 'अचः परस्मि'न्नित्यादौ च। ( कटे शयाने देवदत्ते 'न भूमौ शेते' इति व्यवहारादुपश्लेषोऽपि तथा)। अतोऽव्यवहितार्थकं निर्दिष्टपदम्। वस्तुतोऽवग्रहे संप्रदाय एव शरणम्। संहिताधिकारो, निर्दिष्टपदं च विफलमेव। अर्द्धमात्राकालाधिकव्यवधाने उपश्लेषाऽभावात्। स्पष्टं चेदं 'संहिताया'मिति सूत्रे भाष्यकैयटयोः।

'उदः स्थास्तम्भो'रित्यादौ 'उद'इत्यादि दिग्योगलक्षणा पञ्चमी। तत्राऽनियतदिक्शब्दाऽध्याहारे प्रसक्ते, परशब्दस्यैवाऽध्याहार इति 'तस्मा'दित्यनेन नियम्यते।

'प्रत्ययः' 'परश्चे' त्यादौ तूत्तरांऽशविकला 'तस्मादित्युत्तरस्ये'ति परिभाषा प्रवर्त्तते। अतो न प्रत्यया व्यवहिताः। अत एव 'छन्दसि परेऽपि' 'व्यवहिताश्चे'ति सूत्रं सार्थकम्। 'पूर्वस्ये' ति च न स्थानषष्ठी। तत्तद्विधिभिरेव संबन्धस्य निर्णीतत्वेन, 'षष्ठी स्थाने' इत्यस्याऽप्राप्तत्वात्। अत एवाऽऽगमविधौ न दोषः। 'आने मुगि'त्यादौ तु 'अत आने मु'गित्यापाततः सूत्राऽर्थे ज्ञाते, आगमिसन्देहे प्राप्ते, सप्तम्या अचरितार्थत्वेन, पञ्चम्याश्च पूर्वसूत्रे कृतार्थत्वेन, 'तस्मि'न्नित्यस्यैव प्राप्तौ, पूर्वसम्बन्धित्वं निर्णीयते। एवमन्यत्राऽप्यूह्यम्।

'गाङ्कुटादिभ्य' इत्यादौ अञ्णितः प्रत्ययस्य परस्यैव सम्भवेन,

---

१ ख. पाठः। क. ग. नास्ति। २–२ मध्यस्थोऽयं क. ग. पाठः। ख. तु नास्ति।
३ ख. नास्त्ययं पाठः। ४ 'इत्यादौ न दोषः। तत्राऽञ्णितः' ख. पाठः।

प्रत्यासत्त्या गाङादिप्रकृतिकस्यैव प्रत्ययस्य ग्रहणेन चाऽनियमाऽप्रसक्त्या, परिभाषाया अप्रवृत्तिरेव[1] ।

ननु परिभाषाणां नियमत्वव्यवहारः कथम् ?। तासां विध्यङ्गभूतत्वेन[2], तदेकवाक्यतयैव विधेर्लक्ष्यसंस्कारकत्वस्वीकारेण, व्यवहितादौ प्रवृत्तेरेवाऽभावादिति चेन्न । 'यदि परिभाषासूत्रं न स्यात्तदा[3] व्यवहितादावपि प्रवृत्तिः स्या'दित्येतावता नियमत्वव्यवहारात् । (आसां[4] च न परिसंख्यारूपनियमत्वम् । अपि तु 'व्रीहीनवहन्ती'तिवदार्थनियमत्वमित्यन्यत्र विस्तरः)।

अलोऽन्त्यस्य । 'षष्ठी स्थाने'इत्यनुवर्त्तते । तदाह—षष्ठीनिर्दिष्टेति । स्थानषष्ठीनिर्दिष्टाऽन्त्यस्येत्यर्थः । 'स्थाने'त्यादि किम् ?। इट् तृच ऋकारात्पूर्वो मा भूत् । अन्त्यस्येति । अल इत्यर्थः । अल इति किम् ?। 'पदस्ये'ति विधीयमानं 'वसुस्रंस्वि'ति दत्वं 'स्वनडुद्भ्या'मित्यादावन्त्यस्य पदस्य मा भूत्[5]।

'अन्त्यस्ये'ति षष्ठीसाहचर्याच्चाऽल इति षष्ठ्यन्तमेव ।

तथा च नियमद्वयमत्र फलितम्—'अल एवे'ति, 'अन्त्यस्यैवे'ति च । एवं चाऽल्समुदायोत्तरं स्थानषष्ठी अस्या लिङ्गमिति बोध्यम् । अत एव 'इतोऽत्सर्वनामस्थाने' इत्यादौ नाऽस्याः प्रवृत्तिः । 'पथ्यादीना'मित्यस्याऽवयवषष्ठीत्वात् । 'इत'इत्यस्याऽल्समुदायोत्तरत्वाऽभावाच्च । ध्वनितं चेदमिको गुणवृद्धी (इ)त्यत्र भाष्यकैयटयोः ।

---

१ 'अप्रवृत्तेः' ख. पाठः ।

२ 'विध्यङ्गभूतत्वेन ताभिरुपस्कृतस्य, निष्पन्नमूर्त्तिकस्य विधेः' । ख. पाठः ।

३ 'स्यात्तदा केवले एव विधिरुदाहरणेषु प्रवर्तेत । तथा व्यवहितादावपि' —इति ख. पाठः । ४ ख. पाठः । क. ग. पुस्तके तु नोपलभ्यते ।

५ इतोऽग्रे—'एतेनाऽल इति जसन्तमादेशविशेषण'मिति परास्तम् । कोपानामन्त्याऽऽदेशताऽनापत्तेश्च ।' अयं ख. पाठः । क. कुण्डलितः । ग. नास्ति ।

ङिच्च । अनेकाल्‌र्थमिदम् । तद् ध्वनयन्नाह—सर्वस्येति । आदेरिति । आदेरल इत्यर्थः । ( तेन[1]'द्वीप'मित्यादौ पान्तसमुदायस्य नेत्त्वमित्याहुः )। अत्र'परस्ये'त्यावर्त्तते । तेन परबोधकशब्देन यत्र परस्य स्थाने विधानं, तत्रैवेयं परिभाषा । तेन 'नित्यं ङित' इत्यादौ न दोषः । न च 'धातो'रित्यधिकारात्तत्राऽप्यस्त्येव परशब्देन विधानम् । विकरणव्यवधाने प्रवृत्त्यनापत्त्या, पूर्वोत्तरसाहचर्याच्च 'धातोर्विहितस्ये'त्यर्थस्यैव तत्राऽङ्गीकारात् । अत एवा'ऽनेकाल्शि'दित्यत्र भाष्ये 'शिच्छब्दाऽभावे 'जशःशी'त्यादयोऽन्त्यस्य स्यु'रित्युक्तम् । कैयटेन च—'अतः सर्वनाम्न'-इति षष्ठी, 'नपुंसका'दिति विहितपञ्चमी'ति तदाशयो वर्णितः ।

अनेकाल्शित्स । शित उदाहरणम्—'इदम इश्' । इतः[2] ।

ननु 'नाऽनेकाल्शि'दित्यलोऽन्त्यस्याऽऽदेः परस्येत्यनुसंहारद्वयनिषेधेनैव सिद्धौ, 'सर्वस्ये'ति व्यर्थम् । न च मध्यस्थस्याऽऽपत्तिः । 'निर्दिश्यमानस्ये'ति न्यायविरोधात् । षष्ठ्या बोधितस्य समुदायनिष्ठस्थानित्वस्य त्यागे मानाऽभावाच्चेति चेत् । चिन्त्यमेवैतत् । ( '[3]अनन्तरस्येति न्यायेन 'आदेः परस्ये'त्यस्यैव निषेध इति शङ्कावारणार्थं त'दित्यन्ये ) ।

---

१ क. ग. पाठः । ख. नास्ति ।

२ इतोऽग्रे-'जश्शसोः शि'रित्यादौ तु सर्वादेशतायाः प्राक्शित्वाऽभावेन डा-णलो-रिवाऽऽनुपूर्व्यादनेकाल्त्वेनैव सर्वाऽऽदेशत्वमिति नैतदुदाहरणं तत् ।'

'आदेशानां प्रत्ययाधिकारे पाटेऽपि वाक्यार्थबोधोत्तरमेव प्रत्ययत्वज्ञानेन उपदेशे णलादीनामित्त्वाऽप्रवृत्तेः ।' क. कुण्डलितः पाठः । ख. ग. तु नास्त्येव ।

ख. पुस्तके तु—आदेशानां 'प्रत्ययाऽधिकारे पाटेऽपि नौपदेशिकं प्रत्ययत्वमिति 'प्रत्यय' इति सूत्रे उपपादयिष्यामः । आदेशोत्तरमित्संज्ञालोपयोरेकाल्त्वेऽपि न दोषः । उपजीव्यविरोधादित्याहुः' ।—अयं पाठः, क. पाठस्थाने ।

३ क. ग. पाठः । ख. नास्ति ।

ननु शिद्ग्रहणं व्यर्थम् । तदभावेऽपि इशादेः शकारस्य कार्याऽभावादित्संज्ञाभावेऽनेकाल्त्वादेव सर्वाऽऽदेशत्वसिद्धेः । न च 'ध्वसोरेद्धा'विति लोपस्य सर्वाऽऽदेशत्वाऽर्थमिति वाच्यम् । 'लोपो यी'ति प्रकृते पुनर्लोपग्रहणेन तस्य सिद्धत्वादिति चेन्न । अनुबन्धानामनेकान्तत्वे औशादौ शकारस्य,—'दिव औ'दिति तकारस्येव, 'ऋदोर'बिति दकारस्येव, 'सिब्बहुल'मिति सूत्रे पकारस्येव चोच्चारणार्थत्वसम्भवेन, औत इव

१ 'सिद्धत्वात् । न च 'नाऽनुबन्धकृतमनेकाल्त्व'मिति ज्ञापनार्थम् । तत्फलं 'त्ववेण'इत्यादेरसर्वाऽऽदेशत्वमिति वाच्यम् । अनुबन्धानामनेकान्तत्वात् । तत्रोगित्त्वप्रयुक्तनुम्फलस्य सम्भावितत्वेन पूर्वमित्त्वप्रवृत्तेः । डाणलित्विषये तु सर्वाऽऽदेशत्वं विनाऽनुबन्धत्वस्यैवाऽभावेन, तदतिरिक्तविषयमेवाऽनेकान्तत्वमिति न दोषः । लोपमात्रफलिकेत्संज्ञाया अभावाच्च न लोपः फलम् ।

न च औशः शकारः—'आदेशस्य औकाररूपत्वमेव, न त्वोकाररूपत्व'मिति सन्देहनिवर्त्तकत्वेन न व्यर्थ इति, तस्य लोपमात्रफलकत्वेऽपि, पूर्वमेव भविष्यतीति, तस्य सर्वादेशत्वाय शिद्ग्रहणमिति वाच्यम् । 'अचि श्नु' इत्यादाविव व्याख्यानेनैवाऽसन्देहसम्भवात् । 'औ' इति विभक्तिरहितनिर्देशेनैवाऽसन्देहसम्भवाच्च ।

न चाऽभस्याऽपि टेर्लोपवद्धात्वधिकारस्थत्वेऽपि सार्वधातुकसंज्ञाफलमस्त्विति वाच्यम् । तिङ्साहचर्य-धात्वधिकार-महासंज्ञानां बोधकल्पनेऽतिगौरवात्संज्ञामात्रकल्पनेनाऽपि फलवदुपदेशकालाऽव्यवहितोत्तरकालाऽभावादित्संज्ञाया अनापत्तौ, शकारश्रवणवारणाऽर्थं शित्करणात् । विद्यतिक्रियाऽध्याहारे च मानाऽभावेन, गौरवेण च, शित्करणेन च 'उपदेशे'इत्यस्य प्रधानक्रियाऽन्वयस्यैव युक्तत्वात् । ज्ञापकपरभाष्यस्याऽप्यत्रैव तात्पर्यमित्याहुः ।

कार्यकालपक्षाऽनुगृहीतैकान्तत्वपक्षे तु भाष्योक्तज्ञापकं, तत्फलं च स्पष्टमेवेति दिक्' । —इति ख. पाठः, क. ग. पाठस्थाने ।

२ इत आरभ्य 'न सर्वादेशत्व मिति भाष्ये स्पष्टम्' (१२४ पृ.) इत्यन्तः क. ग. पाठः ।

सर्वाऽऽदेशत्वाऽनापत्त्या तस्याऽऽवश्यकत्वात् ।

'एकान्ता अनुबन्धा'इति पक्षे तु विधेयविषये उच्चारणार्थानामपीत्सं-ज्ञाया'स्तस्य लोपो' 'वेरपृक्तस्ये'त्यादिभाष्यसंमतिपूर्वकं 'दिव औ'त्सूत्रे उपपादयिष्यमाणतया, तत्पक्षे चेत्सञ्ज्ञायाः सर्वत्र प्रयोग एव प्रवृत्त्या, शिद्ग्रहणं विनाऽप्यनेकाल्त्वात्सर्वादेशत्वे सिद्धे, तद्ग्रहणं 'नानुबन्धकृत-मनेकाल्त्व'मित्यस्य ज्ञापनाऽर्थम् । तेन औदादीनां न सर्वादेशत्वमिति भाष्ये स्पष्टम् ।

परत्वादिति । 'आदेः परस्ये'त्यस्याऽवकाशः-'द्व्यन्तरुपसर्गेभ्योऽप ईत्' । द्वीपम् । 'शित्सर्वस्ये'त्यस्य-'इदम इश्' । एवं'मतो भिस' इत्यादि-विषये 'अनेका'ल्शित्यनेना'ऽऽदेः परस्ये'ति परत्वाद्बाध्यते ।

एतेन 'ङिच्चे'त्यत्र 'ङिदेवाऽनेकालन्त्यस्ये'ति नियमेन सिद्धे-ऽनेकाल्ग्रहणं व्यर्थ'मित्यपास्तम् ।

---

१ 'अनेकाल्ग्रहणं व्यर्थम् । किञ्च 'स्वं रूप' मित्यतः पूर्वं 'तस्मादित्युत्त-रस्याऽऽदे'रित्येव सूत्रमस्तु । तत्रा'ऽऽदे'रिति पृथक् वाक्यम् । तत्र 'उत्तरस्ये'-त्यनुवर्त्तते । स्थानषष्ठी चेयम् । एवं च 'पञ्चमीनिर्देशेन यत्कार्यं तदुत्तरसम्बन्धि', 'उत्तरस्य स्थाने विधीयमानं च आदेर्बोध्य'मिति च वाक्यार्थद्वयम् । अत एव '[1]उत्तरस्य' 'आदे'रिति भिन्नविभक्तिनिर्देशः सङ्गच्छते । वाक्यभेदसामर्थ्याच्च '[2]आदे'रित्यंशं विनाऽपि क्वचिदंशाऽन्तरस्य प्रवृत्तिः । 'आदे'रित्यंशस्तु [3]अनुवृत्तो-त्तरस्येत्यस्यावृत्त्या प्राग्व'न्नित्यं ङित'इत्यादौ न प्रवर्त्तते इत्यपास्तम् ।

किञ्चैवमादेरित्यंशे षष्ठी स्थाने इत्यस्याऽसम्बन्धात्तस्याऽऽज्जसेरसुगित्यादावपि

---

1 'तस्मादित्युत्तरस्याऽऽदेरिति' ख. पाठः ।

2 'अंशं विनाऽपि 'गाङ्कुटादिभ्य' इत्यादावंशाऽन्तरस्य' ख. ।

3 इतोऽग्रे-'उपस्थितपरित्यागे मानाऽभावेन, प्रत्यासत्त्या च पूर्ववाक्यप्रापिता-ऽऽदेशस्यैव ग्रहणा'न्नित्यं ङित' इत्यादौ न प्रवर्त्तते' इत्यपास्तम् ।' ख. पाठः ।

स्वरितेन[1]। इत्थम्भूतलक्षणे तृतीया । अधिकारो-विनियोगः। स्वरितत्वज्ञाप्योऽधिकार इत्यर्थः। स्वरितत्वं चाऽधिक्रियमाणपदघटकाऽज्निष्ठम्। 'अस्य स्वरितत्वस्य दोषविशेषरूपत्वाद्धल्ष्वपि सत्त्व'मित्यन्ये।

विनियोगोऽपि–प्रायेणोत्तरत्रोपस्थितिः। क्वचित्पूर्वत्राऽपि। 'कियद्दूरमधिकार' इत्यत्राऽसति नियामके व्याख्यानमेव शरणम्। (स्वरितत्वं चानुनासिक्यवत्प्रतिज्ञागम्यम्)। तदुक्तं–प्रतिज्ञास्वरिताः पाणिनीया इति।

---

प्रवृत्त्यापत्तिः। तावद्दूरं तदनुवृत्तौ 'तस्मादित्युत्तरस्ये'त्यादावपि तत्सम्बन्धापत्तौ तस्याऽप्यागमविषयेऽप्रवृत्त्यापत्तिः। एतेनाऽनेकाल्शित्यतः पूर्वमेव 'तस्मिन्निति निर्दिष्टे पूर्वस्य', 'तस्मादित्युत्तरस्यादे'रिति सूत्रे कुतो न पठिते' इति परास्तम्।'
—अयं पाठः क. कुण्डलितः। ख. ग. त्वयं नास्ति। किन्तु—

एतत्स्थाने ख.पुस्तके तु—'नित्यं ङितः' इत्यादि न प्रवर्तते इत्यपास्तम्।

न च 'ङिच्चे'ति नियमेन सिद्धेऽनेकाल्ग्रहणसामर्थ्यात्पूर्वविप्रतिषेधेन तद्बाधसिद्धिरिति वाच्यम्। क्षिदंशे तत्कल्पने मानाऽभावात्।

नन्वनेकाल्शित्यतः पूर्वमेव 'तस्मिन्निति निर्दिष्टे पूर्वस्य' 'तस्मादित्युत्तरस्याऽऽदे'रिति सूत्रे कुतो न पठिते इति चेन्न। 'ज्यादादीयसः'इत्यादावङ्गाऽधिकारात्। अङ्गस्य च प्रत्यासत्त्या ज्यादिरूपस्य, ईयसुनिमित्तकस्यैव च ग्रहणेन, परिभाषाप्रवृत्तिं विनाऽपि परशब्दाऽध्याहारे एव नियमेन प्रसक्तेऽनियमाऽभावेन, अनियमे नियमकारिण्याः परिभाषाया अप्रवृत्तौ, 'आदेः परस्ये'त्यस्याऽप्राप्त्यापत्तेः। मम तु विभिन्नव्यवहितगुरुतरन्यासकरणसामर्थ्यात्परबोधकशब्देन परस्य विधाने तत्प्रवृत्तेर्न दोषः। एतेन 'तस्मादित्युत्तरस्ये'त्यस्याऽप्य'नेका'ल्शित्यनेन बाधाऽऽपत्तौ, 'ब्राह्मणा अष्टा'वित्यत्र ब्राह्मणपदोत्तरजश्शसोरौशापत्ति'रिति परास्तम्। जश्शस्भ्यामाक्षिप्तप्रकृतेरङ्गस्य च सन्निधानादष्टरूपस्यैव ग्रहणेन, 'तस्मादित्युत्तरस्ये'त्यस्य सिद्धान्तेऽपि प्राप्त्यभावेन क्षत्यभावात्। एवं च पञ्चमी निर्दिष्टात्प्रत्ययसम्बन्धिकार्ये 'तस्मा'दिति परिभाषाया अप्रवृत्तिरिति तत्त्वम्'।–इति पा०।

[1] 'स्वरितेनाऽधिकारः' ख. पाठः। [2] क. ग. पाठः। ख. नास्ति।

न चैवं व्याख्यानादेवाऽनुवृत्ति-निवृत्ती स्तां, किं सूत्रेणेति चेत्। अर्थाऽन्तरसङ्ग्रह इत्यवेहि। तेन स्वरितेनाऽधिकाऽर्थो ग्राह्यः। तेन 'गोस्त्रियो'-रित्यादौ स्त्रीप्रत्ययान्तमात्रग्रहणम्। अपि चाऽधिकः कारः=कृतिः,— यत्पूर्वं सत्परं बाधते। तथा च पूर्वविप्रतिषेधाः सङ्गृहीताः। तत्र स्वरित-पाठादिति दिक्।

**परनित्येति**। **परं**-विप्रतिषेधसूत्राद्बलवत्। **नित्यं**-कृताऽकृतप्रसङ्गि। तद्विपरीतम्—अनित्यम्। तत्राऽक्लृप्ताऽभावकस्याऽभावकल्पनाऽपेक्षया, क्लृप्ताऽभावकस्यैव तत्कल्पनमुचितमिति भावः।

एवं 'शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवती'ति पठ्यते। तदपि न्यायसिद्धम्। यद्व्यक्तिसम्बन्धितया पूर्वं प्रवृत्तिस्तद्व्यक्तिसम्बन्धितयैव पुनः प्रवृत्तौ कृताऽकृतप्रसङ्गित्वं प्रसिद्धमिति। इदं च 'शदेः शित' इति सूत्रे भाष्ये स्पष्टम्। तत्र हि 'न्यविशते'त्यत्र विकरणे कृते, तदन्तस्याऽट्, अकृते धातुमात्रस्येत्यट्-अनित्य इत्युक्तम्।

( अतिदेशविषये तु स्थानिवत्सूत्रे कार्याऽतिदेशाऽऽश्रयणेन, शास्त्रयोर्भेदेनैकस्य कृताऽकृतप्रसङ्गित्वाऽभाव इत्यपि बीजम् )।

एवं च तुल्यन्यायेन-शब्दान्तरात्प्राप्नुवतः, शब्दान्तरे प्राप्नुवतश्चाऽनित्यत्वम्। मूलयुक्तेस्तुल्यत्वात्।

परिभाषायाञ्च 'शब्दान्तरस्ये'ति सम्बन्धसामान्ये षष्ठी बोध्या। इदमेवाऽभिप्रेत्य अतिदेशविषये '**लक्षणान्तरेण प्राप्नुवन्विधिरनित्य**'इत्य-'**सिद्धवदत्रे**'ति सूत्रे **कैयटेनोक्तम्**।

यदि तु शास्त्रव्यतिरेकेण तद्विधेयकार्ययोरेव नित्यत्वादिविचारः, यदाऽपि व्यक्तिविशेषाऽऽश्रयणाऽभावस्तदा नाऽयं न्यायः। तदेतदुच्यते-'**कृताऽकृतप्रसङ्गित्वमात्रेणाऽपी**'ति।'

कृते द्वितीये नित्यत्वेनाऽभिमतस्य प्रसङ्गमात्रं नित्यत्वव्यवहारे

१ क. कुण्डलितः, ख. पाठः। ग. नास्ति।

प्रयोजकं, न तु बाधकाऽऽद्यबाधितफलोपहितप्रसङ्गस्तथा। तदेतदुच्यते— 'यस्य च लक्षणाऽन्तरेण निमित्तं विहन्यते, न तदनित्य'मिति ।

क्वचित्तु बाधकाऽऽद्यबाधितप्रसङ्ग एव गृह्यते । तदेतदुच्यते— 'यस्य च लक्षणान्तरेण निमित्तं विहन्यते, तदप्यनित्य'मिति ।

अत एव सप्तमे कैयट एतदुपष्टम्भकं लोकव्यवहारद्वयमुदाहृतवान्— 'वालिसुग्रीवयोर्युद्ध्यमानयोर्भगवता वालिनि हतेऽपि, सुग्रीवस्य वालिनः प्राबल्यं न व्यवहरन्ति । भगवत्सहायैः पाण्डवैर्जये लब्धेऽपि, पाण्डवानां प्राबल्यं व्यवहरन्ति चे'ति । सर्वं चेदं लक्ष्याऽनुरोधाद्व्यवस्थितं ज्ञेयम् ।

एवं 'लुटः प्रथमस्य' 'आद्युदात्तश्चे'त्यादिसूत्रभाष्यादौ पठ्यमानं- 'स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्यः' इति वचनमपि । इदमपि 'शब्दान्तरस्ये'त्येतत्समानविषयमिति दिक् ।

परान्नित्यं[1] यथा—'तुदती'त्यादौ परादपि गुणान्नित्यत्वात् शाऽऽदि- रिति बोध्यम् ।

अन्तरङ्गेति । अन्तः=मध्ये, बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्ये, ऽन्तर्भूतान्यङ्गानि यस्य तदन्तरङ्गम् । एवं तदीयनिमित्तसमुदायाद्बहि- र्भूताङ्गकं बहिरङ्गम् । एवं च परम्पराऽपेक्षया व्याप्यनिमित्तकं, व्यापक- निमित्तकं चाऽन्तरङ्गं, बहिरङ्गमित्युत्सर्गः[2] । शीघ्रोप[3]स्थितिकत्वं चाऽस्य बलवत्त्वे बीजम् ।

---

[1] 'परान्नित्यं यथा—रध्रेर्णिचि रन्धयति । परामप्युपधावृद्धिं बाधित्वा, नित्यत्वात्, 'रधिजभो'रिति नुम् । न च शब्दान्तरप्राप्त्या सोऽप्यनित्यः । कृताऽकृतप्रसङ्गित्वमात्रेणाऽपि नित्यतायाः क्वचिदभ्युपगमात् । 'वृद्धयौत्व- तृज्वद्भावे'त्यस्य त्वत्र न प्राप्तिः । साहचर्येण विभक्तिनिमित्तानामेव तत्र ग्रहणात् । एवं तुदतीत्यादौ'–इति क. कुण्डलितः ख. पाठः । ग. तु नास्ति ।

[2] इतोऽग्रे–'इदमेव चाऽस्य बलवत्त्वे बीजं—यद्व्याप्यनिमित्तकतया प्रथम- प्रवृत्तिकत्वमित्याहुः ।'—इति ख. पाठः, क. ग. पुस्तकपाठस्थाने ।

[3] क. ग. पाठः । ख. नास्ति ।

एतेना'ऽन्तरङ्गबहिरङ्गयोरन्तरङ्गंव लव'दिति परिभाषाऽन्तरमिति दर्श-यति। अत्र च ज्ञापकम्-'ओमाङोश्चे'त्याङ्ग्रहणम्। तद्धि 'खट्वा आ ऊढे'त्यत्र परमपि सवर्णदीर्घं बाधित्वा, धातूपसर्गकार्यत्वेनाऽन्तरङ्गत्वाद्गुणे कृते, वृद्धिप्राप्तौ सत्यां, पररूपं यथा स्यादित्येवमर्थम्। ऐहीत्यनुकरणस्य शिवा-दिशब्दसम्बन्धे तु नाऽस्य प्रवृत्तिः[1]। ज्ञापकपरभाष्यप्रामाण्येनाऽनित्यं 'प्रकृतिवदनुकरण' मित्यतिदेशमादाय लब्धाऽऽङ्त्वे एतदप्रवृत्तेः[2]।

न चेयं परिभाषा'ऽसिद्धं बहिरङ्ग'मिति परिभाषया गताऽर्थेति वाच्यम्। तस्या 'नाजानन्तर्ये' इति साऽपवादतया'ऽयजे इन्द्र'मित्याद्यसिद्ध्य पत्तेः[3]।

वस्तुतस्तु नेयमसिद्धपरिभाषाऽतिरिक्ता। गौरवात्। विप्रतिषेध-सूत्रभाष्ये तामादायाऽस्याः प्रत्याख्यानाच्च।

'नाऽजानन्तर्ये' इति परिभाषा तु धर्मिग्राहकमानेन[4], 'ओमाङोश्चे'-

---

१ एतदग्रे—'न च शिव-एहीत्यस्याऽनुकरणे, 'एही'त्यस्यैव वाऽनुकरणे, पर-रूपार्थमाङ्ग्रहणं चरितार्थम्। न चाऽनुकार्ये एकादेशादिशास्त्रप्रवृत्त्याऽन्तादि-वद्भावेनाङ्त्वलाभेऽपि, अनुकरणे तदभावः। अनुकार्येऽन्तादिवद्भावलब्धा-ऽऽङ्त्वस्य 'प्रकृतिवदनुकरण'मित्यतिदेशेनाऽनुकरणे सुलभत्वादिति वाच्यम्। 'अभिव्यक्तपदार्था ये' इति न्यायेनाऽर्थपरस्यैवाऽऽङो ग्रहणात्। शीघ्रमुप-स्थितिश्च एतन्न्यायबीजम्' ।—इति ख. पाठः, क. पाठस्थाने।

२ 'एतदप्रवृत्तेः' इत्यन्तः पाठः ख. नास्ति। क. ग. पाठः।

३ इतोऽग्रे—अत एव 'बहुयुवे' त्यादा'वन उपधे'ति विकल्पो न। भविषयेऽन्त-रङ्गेण'संप्रसारणाच्चे'तिपूर्वरूपेणाऽल्लोपस्य बाधात्। नचाऽत्राऽसिद्धपरिभाषायाः प्रवृत्तिः। 'नाऽजानन्तर्ये' इति निषेधादित्याहुः। इयं च परिभाषा सिध्दि नेति 'इको गुणवृद्धी' इत्यत्र भाष्ये स्थितम्। तिङन्ते स्पष्टं निरूपयिष्यामः। —इति ख. पाठः। क. ग. नास्ति।

४ 'धर्मिग्राहकमानेन, ओमाङोश्चेत्यनेन च बहिरङ्गकार्यप्रवृत्तेः पूर्वं यत्राऽन्तरङ्ग-कार्यस्य प्रवृत्त्ययोग्यता तत्रैवेति न 'अयजे इन्द्र' मित्यादौ दोषः'— इति ख. पुस्तके पाठः।

त्याङ्ग्रहणेन चाऽन्तरङ्गबहिरङ्गयोर्युगपत्प्राप्त्ययोग्यत्वे एवेति नाऽ'यजेइन्द्र'-मित्यादौ दोषः । 'ओमाङोश्चे'त्यनेनाऽनित्या सेति वा न दोष—इति भाष्यारूढः पन्थाः । ( एतदुदाहरणं तु 'उभये' इति । अन्तरङ्गत्वान्नित्या संज्ञेति 'उभ'शब्दे निरूपयिष्यते ) ।

इयं चाऽन्तरङ्गबहिरङ्गयोर्युगपत्प्राप्तावेव । एवं च 'पचावेद'मित्याद्यसिद्धिरत आह—असिद्धमिति । अन्तरङ्गशास्त्रत्वमस्या लिङ्गम् । अत एव कार्यकालपक्षे त्रैपादिकेऽन्तरङ्गेऽस्याः प्रवृत्तिरित्याकरग्रन्थाः सङ्गच्छन्ते ।

'एतज्ज्ञापकं 'वाह ऊठ्' सूत्रस्थमूठ्ग्रहणम् । अन्यथा सम्प्रसारणमात्रविधानेऽपि, लघूपधगुणे, 'वृद्धिरेची'ति वृद्धौ, 'विश्वौह'इत्यादिसिद्धेर्वैयर्थ्यं स्पष्टमेव । सत्यां हि तस्यां बहिरङ्गस्य सम्प्रसारणस्याऽसिद्धत्वाल्लघूपधगुणो न स्यात् । स्पष्टं चेदं तत्रैव भाष्ये । अकारान्तोपसर्गे उपपदे, अनकारान्तोपपदे च वहेर्वाहेर्वा 'ण्वि-विचावनभिधानान्न स्त एवेति हि तदाशयः । 'वार्यूह'इत्यादयः प्रयोगास्तु ऊहतेः क्विपि बोध्याः । धातूनामनेकार्थत्वान्नाऽर्थोऽसङ्गतिः । 'प्रौह'इत्याद्यसाध्वेव । वृद्धेर्दुर्लभत्वात् । अस्योहस्याऽऽनर्थक्यान्न 'प्रादूहोढे'त्यस्याऽपि प्रवृत्तिः । न च सम्प्रसारणे 'विश्वौह' इत्यस्याऽसिद्धिः । 'अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलीय'इति परिभाषाऽन्तरस्य सत्त्वेन लघूपधगुणं बाधित्वाऽऽद्गुणस्यैव प्राप्तेरिति वाच्यम् । वार्णादाङ्गस्य बलीयस्त्वात् । परिभाषाऽन्तरस्याऽसत्त्वाच्चेति दिक् ।

अपवादस्तु वचनप्रामाण्याद्बलवान् । सोऽपि यद्यन्यत्र चरितार्थस्तर्हि अन्तरङ्गेण बाध्यते एव । निरवकाशत्वरूपस्य बलवत्त्वबीजस्याऽभावात् ।

यथा 'अयजे इन्द्र'मित्यादावन्तरङ्गेण गुणेन सवर्णदीर्घः समानाश्रये चरितार्थो यण्गुणयोरपवादोऽपि बाध्यत इति बोध्यम् ।

अत्राऽन्तरङ्गत्वमन्तःकार्यत्वरूपम् । अन्तःकार्यत्वं चाऽन्तर्भूतनिमित्त-

---

१ क. ग. पाठः । ख. नास्ति । २ इत आरभ्य–'न दोष' इत्यन्तः क. ग. पाठः । ३ ख. पाठः । ४ 'सङ्गच्छन्ते'इत्यन्तः क. ग. पाठः । ख. नास्ति । ५ 'कृतितुग्ग्रहणादितिदिक् ( पृ. १३१ ) इत्यन्तोऽयं क. ग. पाठः । ख. पुस्तके तु—'यत्र स्वल्पाऽपेक्षत्वमन्तरङ्गत्वं, तत्र तद्बाधं विनाऽपवादस्य

कत्वम् । पूर्वोपस्थितनिमित्तकत्वमिति यावत् । अन्तरङ्गशब्देऽङ्गशब्दस्य निमित्तपरत्वात् । न तु पूर्वोपस्थितस्थानिकत्वमपि । अङ्गशब्दात्तदलाभात् । किञ्चैवं सति 'स्रजिष्ठ'इत्यादौ विन्मतोर्लुकि, टिलोपव्यावृत्तयेऽपवादविन्मतोर्लुक्प्रवृत्त्या जातिपक्षाश्रयणपर्यन्तधावनं 'प्रकृत्यैका'जितिसूत्रप्रयोजनखण्डनावसरे कृतं निष्फलं स्यात् । भवदुक्तरीत्या विन्मतोर्लुको बहिरङ्गाऽसिद्धत्वेन तद्वारणस्य सुकरत्वात् । भाष्ये क्वाऽपीदृशरीत्या बहिरङ्गाऽसिद्धत्वाश्रयणस्याऽदर्शनाच्च ।

इदमन्तरङ्गत्वं लोकन्यायसिद्धमित्यचः परस्मिन्निति सूत्रे भाष्ये स्पष्टम्—'मनुष्योऽयं प्रातरुत्थाय शरीरकार्याणि करोति, ततः सुहृदां, ततः संबन्धिना'मित्यादिग्रन्थे । तदपि युगपत्प्रवृत्तिविषयमेव । न तु जाते बहिरङ्गे तस्याऽसिद्धत्वविषयमपि । लोके तथाऽदर्शनादिति 'वाह ऊठ्'सूत्रे कैयटे स्पष्टम् ।

इयं चोत्तरपदाधिकारे न प्रवर्त्तते इति 'इच एकाच'इति सूत्रे भाष्ये स्पष्टम् । आभीयेऽन्तरङ्गे आभीयस्य बहिरङ्गस्य समानाश्रयस्य नाऽनेनाऽसिद्धत्वमित्यसिद्धवत्सूत्रे भाष्ये स्पष्टम् ।'न सिच्यन्तरङ्गमस्ती'ति तु

---

चारितार्थ्याऽभावेनाऽन्तरङ्गं बाध्यमेव । अत एव 'दधती'त्यादावन्तादेशो न । झोऽन्तस्याऽल्पाऽपेक्षत्वरूपाऽन्तरङ्गत्वेन'जक्षती'त्यादिविषयेऽपि तत्त्वात् ।

न च पूर्वकालप्राप्तिकत्वरूपमन्तरङ्गत्वं 'दधती'त्यस्य विषयेऽधिकमस्तीति 'जक्षती'त्यादौ समकालप्राप्तिके चारितार्थ्यादत्राऽन्ताऽऽदेश एव स्यादिति वाच्यम् । 'उपजनिष्यमाणनिमित्तोऽपवाद' इत्यादिसामर्थ्येन ईदृशाऽन्तरङ्गत्वस्याऽनाश्रयणादित्याहुः ।

अन्तःकार्यत्वरूपाऽन्तरङ्गत्वं त्व'चः परस्मि'न्नित्यत्र भाष्ये स्पष्टम् । इदं चाऽल्पापेक्षत्वरूपाऽन्तरङ्गत्वाऽपेक्षया दुर्बलम् । ध्वनितं चेदम्—'अत्र' 'अस्मा'दित्यादावेकदेशादन्तरङ्गत्वात्स्मायादय इति 'सर्वनाम्नः स्मै' इति सूत्रस्थभाष्येण । इयं चोत्तरपदाधिकारे न प्रवर्त्तते इति 'इच एकाच' इति सूत्रे भाष्ये स्पष्टम्' ।—इति १३१ पृष्ठस्थ'दिक्'इत्यन्त—क. ग. पाठ—स्थानेऽयं पाठः ।

निष्प्रमाणकमिति निरूपित'मिको गुणे'ति सूत्रे भाष्यप्रदीपोद्द्योते। उपपादयिष्यते च तिङन्ते ।

तथा[1]–'परोपस्थितिनिमित्तकं बहिरङ्ग'मित्येतद्युगपत्प्राप्तौ पूर्वप्रवृत्तिनियामकमेव, न तु जातस्य तादृशबहिरङ्गस्याऽन्तरङ्गेऽसिद्धतानियामकम्। प्रागुक्तलोकन्यायेन तथैव लाभात्। अत एव 'वाय्वो'रित्यादौ वलि लोपो यणः स्थानिवत्त्वेन वारितो भाष्ये'ऽचः परस्मि'न्नित्यत्रेति बोध्यम् ।

इयं चाऽनित्या कृति–तुग्ग्रहणादिति दिक् ।

अकृतेति । विशिष्ट ऊहो येषु तानि—व्यूहानि । ऊहस्तर्कः । स च बहिरङ्गेणाऽन्तरङ्गस्य निमित्तविनाशरूपः । तद्वन्ति अन्तरङ्गाणि–अकृतानि यैरित्यर्थः । बहिरङ्गेणाऽन्तरङ्गस्य निमित्तविनाशे पश्चात्संभाविते‌ऽन्तरङ्गं नेति फलितम् ।

यद्वा—न कृतो विशिष्ट ऊहो = निश्चयः शास्त्रप्रवृत्तिविषयो यैरित्यर्थः । अध्याहारात्[2]—'निमित्तविनाशसम्भावनाया'मिति लभ्यते । अस्यां[3] च ज्ञापकं 'समर्थानां प्रथमा'दितिसूत्रे 'समर्थान'मिति । तद्धि सुत्थितात्कृतदीर्घात्प्रत्ययो यथा स्यादित्यर्थम् । अन्तरङ्गत्वाद्दीर्घे कृते एव प्रत्ययप्राप्त्या तद्व्यर्थं सदस्या ज्ञापकम् । तत्र हि भाविन्याऽऽदिवृद्ध्या सवर्णाऽच्त्वविनाशः स्पष्ट एव । ( न च[4] तत्परिभाषासत्त्वे कृतवर्गानुपूर्वीकं समर्थमेव दुर्लभम् । अस्य क्वचिदेवेष्टसिद्ध्यर्थमाश्रयणमित्यर्थस्याऽपि बोधनात् ) । उपपादयिष्यते चेदं तत्रापि ।

---

१ 'तथा' इति ग. पाठः । २ 'आक्षेपादध्याहाराद्वा' ख. पाठः ।

३ ख. पुस्तके तु–'अस्यां च ज्ञापकं 'गोरतद्धितलुकी'तिसूत्रस्थं 'तद्धित'ग्रहणम् । तद्धि'राजगवीयती'त्यादौ सुपो लुकः सत्त्वेन टजिनषेधो मा भूदिति क्रियते । अन्यथाऽन्तरङ्गत्वाट्टच्सिद्धौ किं तेन' ।—अयं पाठः ।

४ क. कुण्डलितः पाठः । ख. ग. नास्ति ।

एवमदो जग्धिरिति सूत्रस्थं 'ल्यप्'ग्रहणमपि मानम् । 'अन्तरङ्गानपि विधीन्बहिरङ्गो ल्यब्बाधते' इतिवचनस्योक्तवचने एवाऽन्तर्भावः ।

यद्यपि 'कृतमपि वा निवर्त्तयन्ती'ति परिभाषाऽन्तरं पठ्यते । फलं च तुल्यम् । तथा'प्यकृते'त्येव लघु । 'प्रक्षालनाद्धी'ति न्यायादिति बोध्यम् ।

न कुर्वन्तीति । यथा 'निषेदुषी'मित्यादौ क्वसोरिटमन्तरङ्गत्वात्प्राप्तमपि 'भाविना संप्रसारणेन वलादित्वं नङ्क्ष्यतो'त्यालोच्य न कुर्वन्तीत्यर्थः ।

'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इत्यस्य 'प्रत्ययोत्तरपदयोश्चे'ति सूत्रं ज्ञापकम् । 'त्वत्कृत'मित्यादौ लुगपेक्षयाऽन्तरङ्गत्वाद्विभक्तिनिमित्तक-'त्वमावेकवचने' इत्येव सिद्धे, इदं व्यर्थं सत्तज्ज्ञापकम् ।

ननु 'तव पुत्रस्त्वत्पुत्र' इत्यादौ तवममादिबाधनार्थं तदावश्यकमिति चेत् । एवं तर्हि मपर्यन्तग्रहणाऽनुवृत्तिरत्रत्या तज्ज्ञापिकेति भाष्यकृतः ।

युष्मदादिभ्य आचारक्विप्तु नाऽस्त्येव । संपूर्णसूत्रस्य ज्ञापकतापरभाष्यप्रामाण्यात् । 'ह्रस्वनद्याप' इति नुड्विधायकसूत्रस्थभाष्यप्रामाण्येन हलन्तेभ्य आचारक्विबभावाच्च । एवमेवैकाऽर्थकाभ्यां प्रातिपदिकप्रकृतिकणिचोऽप्यनभिधानं बोध्यम् ।

ननु मपर्यन्ताऽनुवृत्तिरपि सर्वादेशत्ववारणाय चरिताऽर्था । न चोत्सर्गसमानदेशा अपवादा' इति न्यायेन मपर्यन्तस्यैवाऽऽदेशे सिद्धे, तदनुवृत्तिर्व्यर्थेति वाच्यम् । तस्य अमकजादौ व्यभिचारादिति चेन्न ।

अमि मित्त्वेन, बहुचि पुरस्ताद्ग्रहणेनाऽकचि प्राक्टेर्ग्रहणेन तस्य बाधेऽप्यत्रोत्सर्गस्य त्यागे मानाऽभावात् । अत एव 'तस्मिन्नणि चे' त्यनेन

---

१ 'ल्यब्बाधते, लुग्वा बाधते'-इत्यादिवचनानामुक्तवचने' ख. पाठः ।

२ 'इति परिभाषायाः' ख. पाठः । ३ 'सूत्र'मिति क. ग. पाठः ।

४ 'विभक्तिनिमित्तके'ति क. ग. पाठः । ५ 'ननु सापि सर्वादेशत्व' ख. पाठः ।

६ एतदारभ्य 'तदाशयः' ( पृ. १३३ ) इत्यन्तःक. ग. पाठः ।

युष्माकाद्यादेशविधानं चरितार्थम् । अन्यथा आकञादेशमेव विदध्यात् । आकङि हि तवकाद्यादेशयोरेतदपवादयोरुक्तन्यायेनान्त्यादेशत्वापत्तिरतः समुदायादेशविधानम् । एवञ्च मपर्यन्ताऽनुवृत्तिस्त्वत्कृतमित्यादौ मपर्यन्तस्यादेशविधानार्था । तत्र चाऽन्तरङ्गत्वात्त्वमावित्येव सिद्धे व्यर्था सा एतज्ज्ञापिका । ज्ञापिते त्वस्मिन्नेतद्विषये तवादीनामप्राप्त्या, तदपवादत्वाऽभावेन, मपर्यन्तस्यैवादेशार्थं सा चरितार्थेति[1] तदाशयः[2] ।

यत्तु हरदत्तेना'ऽन्तरङ्गप्रवृत्तौ–प्रत्यये, उत्तरपदे च मपर्यन्ताऽसम्भवेन तदनुवृत्तिर्ज्ञापिके'त्युक्तम् । तन्न । अन्तरङ्गाणामप्यपवादबाध्यत्वेन, तद्विषये तदप्रवृत्तेः ।

इयं च 'सुपो धात्वि'ति लुग्विषयैवेति केचित् । 'एङ्ह्रस्वात्सम्बुद्धेः' 'न यासयो'रित्यादिसूत्रस्थाऽऽकरप्रामाण्येन लुग्मात्रविषयेति तत्त्वम् । अत एव'सनीस्रंस'इत्यादौ नलोपाऽभावः । 'पञ्चखट्व'इत्यादावेकादेशात्प्रागेव च टापो लुक् । अन्यथा कृतैकादेशस्य लुकि अकारश्रवणं न स्यात्[3] ।

---

१ 'मानाऽभावात् । एवञ्च मपर्यन्तानुवृत्तिर्वाक्यभेदेन पुनर्विधानार्था । तच्च 'त्वकृत'मित्यादावन्तरङ्गत्वात्पूर्वेणैव सिद्धे व्यर्थमिति ज्ञापकत्वं सुस्थम्' —ख. पाठः ।

२ ( १३२ पृष्ठस्थ ) अतएव इत्यारभ्य एतदन्तः क. ग. पाठः । ख. नास्ति ।

३ इतोऽग्रे—'तस्याऽप्यकृतव्यूहपरिभाषाज्ञापकत्वमेवोचितम् । लाघवात् । 'अन्तरङ्गानपी'ति न्यायेनाऽप्यन्तरङ्गनिमित्तविनाशकलुकस्तत्प्रयोजकीभूतसमासादीनामेव च प्राबल्यबोधनेनाऽविशेषात् । अत एव 'समर्थग्रहणमकृतव्यूहपरिभाषाज्ञापक' मित्याकरोक्तं सङ्गच्छते । किञ्चाऽकृतव्यूहपरिभाषाऽतिरिक्तत्वे तयैवोत्तरपदपदस्य चारितार्थ्येऽस्या ज्ञापकमपि भज्येत । अकृतव्यूहपरिभाषा च येन नाऽप्राप्तिन्यायेनाऽन्तरङ्गपरिभाषाऽपवादिकेति बोध्यम् । निमित्तविनाशसम्भावनाऽप्येतत्प्रवृत्तिनिमित्तम् ।'—इत्ययं ख. पाठः— ( १३४ पृष्ठस्थ ) 'अयं न्यायोऽप्यन्तरङ्ग' इति क. ग. पाठस्थाने ।

अयं न्यायोऽप्यन्तरङ्गनिमित्तविनाशकलुकस्तत्प्रयोजकीभूतसमासादीनां च प्राबल्यबोधक इत्यकृतव्यूहपरिभाषाऽन्तर्गत एव। अन्यथा तयैव 'प्रत्ययोत्तरपदयोश्चे'त्यस्य चारितार्थ्ये, एतज्ज्ञापकत्वं तस्य भज्येत। ( लुग्निमित्तप्राबल्यबोधकत्वं 'चा'विति कैयटे स्पष्टम् )।

अकृतव्यूहपरिभाषाप्रवृत्तौ निमित्तविनाशसम्भावनाऽपि निमित्तम्[1]। अत एव 'गोमद्दण्डी' त्यादौ हल्ङ्याादिलोपो न। अन्यथा हल्ङ्यादिलोपकाले सामासिकलुकोऽप्राप्त्या, तदुत्तरं चाऽप्यपहा[3]र्योऽभावादप्राप्त्या, लोपस्यैवाऽऽपत्तेः। अस्ति चाऽत्राऽपि 'यदीदं न स्यात्तर्हि लुक् स्यादेवे'ति सम्भावना। 'अल्लोपोऽन' इति सूत्रस्थतपरकरणन्तु परिभाषाऽनित्यत्वज्ञापनेन चरितार्थम्। तद्धि 'आन' इत्यादौ लोपवारणाय। अन्यथा दीर्घाऽभावे लोपसम्भावनयाऽकृत[4]व्यूहपरिभाषाबलाद्दीर्घाऽप्राप्तौ, तद्वैयर्थ्यं[5] स्पष्टमेव[6]।

[ यत्तु[6]'अकृतव्यूहपरिभाषा भाष्ये क्वाऽपि न पठिते'ति असिद्धवत्सूत्रे कैयटादयः। तन्न। सूत्रवृत्त्यादिसंमताया भाष्याऽनुक्तत्वमात्रेणाऽनङ्गीकारस्याऽयुक्तत्वात्। 'अप्रतिषिद्धमनुमतं भवती'ति न्यायाच्च। 'अन्तरङ्गानपी'ति न्यायज्ञापनेन भाष्यकृताऽप्युक्तत्वाच्च। 'चा'विति सूत्रभाष्यादौ ध्वनितत्वाच्च। तथा च तत्र भाष्यम्—'चौ प्रत्यङ्गस्य प्रतिषेधो वक्तव्यः। नैष दोषः। एतदेव ज्ञापयत्याचार्यो—'न चौ प्रत्यङ्गं भवति, यदयं चौ दीर्घत्वं शास्ती'ति। प्रत्यङ्गम्। अन्तरङ्गमित्यर्थः। 'समर्थाना' मिति सूत्रभाष्ये च ध्वनिता। कैयटेन च स्पष्टमुपपादिता।

१ 'निमित्तम्' इत्यन्तोऽयं क. ग. पाठः। ख. नास्ति।

२ ख. ग. नास्ति, क. कुण्डलितः। ३ 'तदुत्तरमप्यपहार्यो' ख. पाठः।

४ 'एतत्परिभाषाबलात्' क. पाठः।

५ 'स्पष्टमेवेति स्पष्टम'चः परस्मिन्' 'न पदान्ते'ति सूत्रादौ कौस्तुभे' ख. पाठः।

६ क. कुण्डलितः ख. पुस्तकपाठः। ग. नास्ति।

असिद्धवत्सूत्रस्थकैयटादयस्तु[1] 'कृतमपि शास्त्रं निवर्त्तयन्ती'त्येतत्परिभाषाऽन्तराऽभावपरा[2] इत्यन्ये ।

एवं[3]'मुपजनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधते' इति न्यायोऽप्यकृतव्यूहपरिभाषाऽन्तर्गत एव। अपवादविषयाऽभावस्याऽपि निमित्तकोटौ प्रवेशात्। यथा 'दधती'त्यादावदादेशमवलोक्याऽन्तादेशो नेत्याहुः। अपरे तु—एतैः सर्वैरन्तरङ्गपरिभाषाऽनित्यत्वमेव ज्ञाप्यत इत्याहुः ]।

[ यत्तु[4]—'न च बहिरङ्गतया वृद्धेरसिद्धत्वात् 'सौत्थिति'रित्यत्र न निमित्तविनाश इति वाच्यम्। समर्थग्रहणेनैतद्विषये तस्या अप्रवृत्तेरपि ज्ञापनात्। यद्वा—एतज्ज्ञापकैरन्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यते इति। तन्न। अन्तरङ्गबहिरङ्गयोः समकालप्राप्त्यभावेन 'अन्तरङ्गं बलव'दित्यस्याऽप्राप्तेः। 'असिद्धं बहिरङ्ग'मित्यनयाऽपि जातस्य बहिरङ्गस्याऽन्तरङ्गे कर्त्तव्येऽसिद्धत्वं बोध्यते, न तु जातेऽन्तरङ्गे तस्य तत्त्वं बोध्यते। मानाऽभावात्। फलाऽभावाच्च। एवं च सूत्थितादावैकादेशस्य परिभाषासाध्यत्वाऽभावेन तदनित्यत्वज्ञापनाऽसम्भव इति दिक्।

परे तु 'सेदुष' इत्यादौ पूर्वमिटि, ततः संप्रसारणे, 'नाऽजानन्तर्ये' इति निषेधाद्बहिरङ्गपरिभाषाया अप्रवृत्त्या, यणि, बहिरङ्गतयैव सम्प्रसारणाऽसिद्धत्वेन वलपरत्वाद्यस्य लोपे, तत्सिद्धिरित्येषा परिभाषा निष्फला।

न च 'लोपो व्यो'रित्येतद्विषये बहिरङ्गाऽसिद्धत्वे 'गौधेरः' 'पचेर'न्नित्यादावाङ्गत्वेन बहिरङ्गतया एयादीनामसिद्धत्वेन यलोपाऽनापत्तिरितिवाच्यम्। तद्विषये निर्णीतलक्ष्यतयाऽनित्यत्वेन तदप्रवृत्तावपि, प्रकृतविषये तदप्रवृत्तौ मानाऽभावात्। अत एव 'वाय्वो'रित्यादेर्बहिरङ्ग-

---

१ तुः क० नास्ति। 'कैयटादयस्तु चिन्त्याः' ख. पाठः।

२ 'परिभाषाऽभावपरा चेति दिक्' ख. पाठः।

३ 'इत्याहु' रित्यन्तोऽयं ख. पाठः। क. ग. नास्ति। ४ क. ग. पाठः। ख. नास्ति।

परिभाषया सिद्धिराकरे उक्ता। 'समर्थानां प्रथमा'दिति सूत्रस्थसमर्थ-ग्रहणन्तु 'विषुण' इत्यादावकृतसन्धेः प्रत्ययदर्शनेन सर्वत्र तथात्वभ्रमवारणाय न्यायसिद्धार्थोऽनुवाद एव। ध्वनितं चेदं विप्रतिषेधसूत्रे भाष्ये।

तत्र हि—'द्यौकामिः' 'वैक्ष्माणिः' 'सौवश्व' इत्याद्यन्तरङ्गपरिभाषोदाहरणमुक्तम्। किञ्च पदावधिकेऽन्वाख्याने 'वार्णादाङ्गं बलीय'इति प्राप्तवृद्धिवारणाय तत्। ]

( यत्तूपेयिवानिति सूत्रे 'उपेयिवा'नित्यत्रेडर्थं निपातनम्। इणो लिटः क्साविटः पूर्वं नित्यत्वाद्द्विर्वचने 'दीर्घ इण'इत्यभ्यासदीर्घत्वे, तत्सामर्थ्यादेकादेशाऽभावेऽनेकाच्त्वाद्वस्वेकाजित्यप्राप्तस्येटो निपातनं क्रियते।

न चेयतुरित्यत्र दीर्घः सावकाशः। पूर्वपरविधेरपि पूर्वविधित्वेन, यणादेशस्य स्थानिवत्त्वादेकादेशप्राप्तेरित्युक्तम्। एवं चेदजादावुपेयुष इत्यादावतिप्रसङ्ग इत्युक्तम्। तत्तु पदावधिकेऽन्वाख्यानेऽन्तरङ्गत्वमनाश्रित्य प्रवृत्तम्। तदा हि नित्यत्वात्सम्प्रसारणे न वलादिलक्षण इट्, पूर्वस्यैव विधौ स्थानिवत्त्वमनाश्रित्येव, 'वस्वेकाजा'दिति नियमबाधितेटः प्रतिप्रसवोऽय'-मित्यनाश्रित्येव चेति दिक्)।

यदपि—'असिद्धव'त्सूत्रे 'वसुसम्प्रसारणमज्विधौ सिद्धं वक्तव्यं', 'पपुषः' 'तस्थुष'इत्यादौ वसोः सम्प्रसारणे कृते आतो लोपो यथा स्या'दिति भाष्ये उक्तम्, तदपि पदस्य विभज्याऽन्वाख्यानपक्षे 'पपा वस् अ'सिति-स्थितेऽन्तरङ्गपरिभाषाया अनित्यत्वादनाश्रयणेन नित्यत्वात्सम्प्रसारणे, ततो बहिरङ्गाऽसिद्धत्वस्याऽनित्यत्वादिडभावे, वस्निमित्तक एवाऽऽतो लोप इत्यभिमानेनैकदेश्युक्तिरिति कैयटेन ध्वनितम्। सिद्धान्तिसंमतोदाहरणन्तु 'लुलुवुष' 'चिच्युषः'इत्याद्येव भाष्योक्तम्।

तत्र हि–'वस्वेकाजा'दिति नियमादिडभावः। अत एव 'चा'विति सूत्रे 'चौ प्रत्यङ्गस्य प्रतिषेध' इति वचनं वार्त्तिककृताऽऽरब्धं, भाष्यकृता च न प्रत्याख्यातम्।

१ क. कुण्डलितः पाठः। ख. ग. तु नास्ति। २ क. ग. पाठः। ख. नास्ति।

प्रत्यङ्गम् = अन्तरङ्गम् । अस्यां परिभाषायां सत्यान्तु तद्वैयर्थ्यं स्पष्टमेव । अत एव 'च्छ्वो'रिति सूत्रे-'अवश्यमत्र तुगभावार्थो यत्नः कार्यः । अन्तरङ्गत्वाद्धि तुक् प्राप्नोती'ति भाष्ये उक्तम् । तत्सत्त्वे तुकोऽप्राप्त्या यत्नाऽवश्यकत्वकथनमसङ्गतमिति स्पष्टमेव । न च तदनित्यत्वज्ञापनार्थम् । 'अवश्यमत्रे'त्यक्षरस्वारस्यभङ्गाऽऽपत्तेः । तथा ल्यब्विधेर्लुग्विधेश्चाऽन्तरङ्गबाधकतायां प्रागुक्तं भाष्योक्तं ज्ञापकं सङ्गच्छते । अन्यथा तयैव तज्ज्ञापकत्वेनाऽभिमतानां चारितार्थ्यं स्पष्टमेव । सर्वं चेदं 'समर्थाना'मितिसूत्रेऽसिद्धवत्सूत्रे च कैयटेन ध्वनितं, स्पष्टमुक्तं चेत्याहुः ।

( इति परिभाषाप्रकरणमिति )[1] । 'समर्थः पदविधि' रित्यादीनामन्यत्रोपन्यासस्तु कार्यकालपक्षमाश्रित्य[2] । सूत्रकृताऽपि[3] तस्यास्तथैव करणाच्च । सर्वशास्त्रोपकारिकाणामेवाऽत्र पाठाच्च ।

॥ इति परिभाषाप्रकरणम् ॥

स्यादिति । कार्यशब्दवादे इदम् ।

संहितायां विषय इति । कार्यिनिमित्तयोः संहितायां विषयभूतायामित्यर्थः ।

स्थानत[4] इति । इदं यथासङ्ख्यसूत्रे भाष्ये स्पष्टम् । 'जातिपक्षे

---

१ यद्यपि नायं पाठः केष्वपि पुस्तकेषूपलभ्यते, तथापि—आवश्यकत्वाकृष्ट इति मत्वाऽस्माभिः () अत्र स्थापितः ।　　२ क. पाठोऽयम् । ख. तु 'कार्यकालपक्षे' इति पाठः ।　　३ क. पाठः । ख. ग. नास्ति ।

४ इत आरभ्य 'झल्त्वसिद्धिरिति दिक्'इत्यन्तः क. ग. पाठः । ख. पुस्तके तु तत्स्थाने—'स्थानत आन्तर्य्यादिति । अत एवाऽनुनासिकाऽनुकरणे 'दधिँ अत्रे' त्यादौ, 'स्वौज'सित्यादौ चाऽनुनासिकस्थाने न निरनुनासिक इति भावः । न चाऽस्य विधीयमानत्वेन सवर्णोऽग्राहकत्वात्कथमनुनासिकविधानमिति वाच्यम् । गुणानामभेदकत्वाऽऽश्रयणात् । स्पष्टं चेदम् 'ऊत्र'इति सूत्रे भाष्ये । एतेन 'यथासङ्ख्यसूत्रेणैवाऽत्रेष्टसिद्धि'रित्यपास्तम् । (अग्रे १३८ पृष्ठेऽपि टिप्पणीयम्) ।

यथासङ्ख्येनाऽपि निर्वाह' इति 'स्थानेऽन्तरतम'सूत्रे भाष्ये स्पष्टम्।

---

( १३७ पृ० टिप्पणीयम्- ) इक्पदोपस्थित-ह्रस्वोपस्थाप्य-दीर्घादौ प्रत्ययाऽर्थाऽऽद्यन्वयाय प्रत्याहारेषु तद्वाच्यवाच्ये लक्षणाया 'दीर्घोजसिचे'-त्यत्र निरूपयिष्यमाणत्वेन, इक्पदात्षट्षष्टेरुपस्थित्या, यण्पदेन—गुणानामभेदकत्वेन चतुर्णाम्—

—वस्तुतः स्वरूपकृतभेदसत्त्वेन भाव्यमानत्वेन सवर्णाऽग्राहकत्वेऽपि, अनुवाद्यसमर्पकत्वेऽपि, यण्पदे लक्ष्यतावच्छेदकस्य प्रसिद्धत्वेन लक्षणया—सप्तानां वोपस्थित्या, संख्यासाम्याऽभावेन तदप्राप्तेश्च। न च शक्यार्थमात्रविषयकबोधे 'ल्वादिभ्य'इत्यादिनिर्देशोहिततात्पर्याऽनुपपत्तिज्ञानपूर्वकमेव लक्षणायाः प्रसरेण, प्राथमिकीं वर्णसमाम्नायपठितवर्णमात्रविषयिकामुपस्थितिमादाय यथासंख्यमस्तु। एवं च शक्याऽर्थस्मृतौ यथासंख्यसहायेन तद्विषयकवाक्यार्थचतुष्टये 'इत्युत्तरस्ये'त्यादिनिर्देशैर्लक्ष्यसंस्कारके निष्पन्ने, 'ल्वादिभ्य'इत्यादिनिर्देशाल्लक्षितदीर्घादीनां तदन्वयिन्येवाऽन्वय इति वाच्यम्। ऋकारे लकाराऽऽदेशस्य, ऌकारे राऽऽदेशस्य च प्रसङ्गात्।

न चेगादिपदोपस्थापितेकारादिभिर्दीर्घादीनां बोधे, तेषु प्रकृतिजन्यवृत्त्या, समभिव्याहृतपदजन्यवृत्त्या चोपस्थित्यभावेन विभक्त्यर्थस्य, यण्पदार्थस्य चाऽन्वयानाऽऽपत्तेस्तेषां जातिपरत्वमणुदित्सूत्रे भाष्ये उक्तम्। यथासंख्यसूत्रं च व्यक्तिसाम्य इव धर्मसाम्येऽपि प्रवर्त्तते। अत एव 'स्यतासी ऌलुटो'रित्यादौ न दोषः। नाऽप्यत्र पक्षेऋकारादौ ऌकाराद्यापत्तिः। ऌत्वादिजातेर्ऋकारेऽभावात्। 'उरण्रपर'इत्यादाविव ग्राहकशास्त्रेण ग्रहणेऽप्युक्तरीत्यापदादिभिरन्वयादिति वाच्यम्। अनुनासिकाऽननुनासिकव्यवस्थासिद्धये 'स्थानेऽन्तरतम'-सूत्रप्रवृत्तेरङ्गीकार्यत्वात्। यदि तु ऋऌवर्णयोः सावर्ण्यस्थाने 'ऌवर्ण्यस्य ऋव'-दित्यतिदेश एव क्रियते। 'ऋऌक्'सूत्रे भेदेन निर्देशादतिदेशाऽनित्यत्वेन नाऽतिप्रसङ्गः। अत एवाऽण्ग्रहणप्रत्याख्यानेऽपि 'उर'णित्यादौ न दोष इत्युच्यते, तदा जातिपक्षेऽपि ऌकारे रेफाऽऽपत्तिरिति दिक्' ।–इत्ययं ख. पाठः।

अनुनासिकस्थानेऽपि निरनुनासिक एव । विधीयमानत्वेन सवर्णाऽग्राहकत्वात् । गुणाऽभेदकत्वपक्षोऽपि न विधेयाऽण्विषये । 'अप्रत्यय' इत्यनेन जातिग्रहणप्रयुक्तस्य, गुणाऽभेदकत्वप्रयुक्तस्य, सूत्रप्राप्तस्य च सवर्णग्रहणस्य निषेधात्, जातिग्रहणप्रयुक्तस्यापि तपरसूत्रेणेव । दीर्घादीनामिगादिपदैरुपस्थितये प्रत्याहारेषु जातिपक्ष एवावश्यक इत्यणुदित्सूत्रे भाष्ये स्पष्टम् । अत एव सवंझकारादीनां झल्त्वसिद्धिरिति दिक् ।

ननु स्थानप्रमाणोभयान्तरतमे ह्रस्वेकारे चरितार्थो यण् दीर्घे कथं प्रवर्त्तेतेत्यत उक्तम्—स्थानत इति । सर्वतोऽस्य बलवत्त्वात् । 'स्थानेऽन्तरतमे' इति सप्तम्यन्तपाठस्य चैतद्दूषणेनैव भाष्ये दूषितत्वादिति भावः ।

चकारो विध्यर्थस्तदाह—द्वे वा स्त इति । 'यरोऽनुनासिके'इति सूत्राद्वाग्रहणमनुवर्त्तते इति 'नाज्झला'वित्यत्र भाष्यकैयटयोरुक्तेः । सूत्रकृता शाकल्यमते सर्वत्र द्वित्वाऽभावोक्तेश्च । 'हली'ति वक्तव्ये'ऽनची'ति करणात्, 'वाक्', 'वाक्क्' इत्यसिद्धेश्च प्रसज्यप्रतिषेधः । तदाह—न त्वचीति । तत्राऽस्मिन्द्वित्वे द्विःप्रयोग एव, न तु स्थाने द्विर्वचनत्वम् । मानाऽभावात् । 'यर' इत्यादेरध्याहृतोच्चारणक्रियाऽपेक्षया कर्मषष्ठ्या एवोचितत्वाच्च । 'सर्वस्य द्वे' इत्यत्र स्थानेद्विर्वचनत्वे मानन्तु तत्रैव वक्ष्यामः ।

इति धकारेति । न तु द्वित्वे पूर्वधस्थाने जस्त्वनिष्पन्नदस्याऽपि । लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेः । 'विकाँरभेदेन न लक्ष्यभेद' इत्यन्यत्र प्रपञ्चितम् ।

---

१ ख. नास्ति ।　२ क. ग. पुस्तकपाठः । ख. नास्ति ।

३ इतोऽग्रे-'जश्त्वस्याऽसिद्धत्व'मिति तु न युक्तं, 'पूर्वत्राऽसिद्धीयमद्वित्वे' इति निषेधात् । यथा चाऽत्र न लक्ष्यभेदस्तथा 'समः सुटी'त्यत्र निरूपयिष्यामः । कार्यकालपक्षे जश्त्वस्य बहिरङ्गतयाऽसिद्धत्वेन लक्ष्यभेदस्योक्तिसम्भवाऽभावाच्चेति भावः ।' ख. पाठः ।

४ 'प्रपञ्चित' मित्यन्तोऽयं क. ग. पाठः ।

न चाऽत्र यणो बहिरङ्गत्वेनाऽसिद्धत्वादच्परत्वमेवेति वाच्यम् । 'नाऽजानन्तर्ये' इति निषेधात् । ( यथोद्देशपक्षे तदप्राप्तेश्च )।

यद्यपि तत्स्थानाऽऽपन्नस्य तद्धर्मलाभो दृष्टो लोके, यथा याज्यकुलादौ गुर्वभावे गुरुप्रेषितच्छात्रादेः पूजादि । तथाऽपि 'स्वं रूप'मिति सूत्राद्व्याकरणे न स्यादतः स्थानिवत्सूत्रम् ।

आदेश इति । अत एव 'अग्रही'दित्यादौ ईट इट्त्वसिद्धिः ।

[ एतेन 'धात्वङ्गकृत्तद्धिताऽव्ययसुप्तिङ्पदादेशा'इति वृत्त्याद्युक्तं, सिजादीनां च प्रत्ययाधिकारपाठात् अम्वत्प्रत्ययत्व'मिति तद्विवरणोक्तं च अपास्तम् । अव्ययस्याऽङ्ग-पदाभ्यां पृथग्ग्रहणवैयर्थ्याच्च। परिगणनपक्षे मनोरमायामव्ययपदवैयर्थ्याऽनुक्तिस्तु 'तत्पक्षे प्रयोगाऽसिद्धिरूपदोषस्याऽपि सत्त्वम् , उदाहरणत्वपक्षे तु तद्वैयर्थ्यमेव दोष'इत्यभिप्रेत्येत्याहुः । यत्त्वव्ययांशे 'प्रस्तुत्ये'ति वृत्तावुदाहृतम् । 'सर्वे सर्वपदाऽऽदेशा'इति न्यायेन 'प्रस्तुत्वे'त्यस्य स्थाने 'प्रस्तूये'त्यादेश इति व्याख्यातारः । तन्न । 'अर्थवत्येव स्थानित्व'मिति तत्तात्पर्येण क्त्वोऽप्यर्थवत्त्वेन तादृशस्थान्यादेशभावकल्पने मानाऽभावात् । ( न च जहत्स्वार्थायां वृत्तौ क्त्व आनर्थक्यम् । भूतपूर्वगत्या तत्राऽप्यर्थवत्त्वात् । अत एवाऽत्र तुक् )। क्त्वामात्रं च नाऽव्ययमिति स्पष्टमेव । कृत्त्वेन सिद्धेश्च ]।

न तु स्थान्यलेति । स्थानिसम्बन्ध्यल्वृत्तिधर्माश्रये नेत्यर्थः ।

---

१ ख. पाठः । २ 'शिष्यकुलादौ' ख. पाठः । ३ 'गुरुपुत्रादेः' ख. पाठः ।
४ 'स्वं रूपमिति सूत्राल्लक्षणप्रतिपदोक्तपरिभाषया च व्याकरणे'-ख. पाठः ।
५ 'अत एव सिजादीनामादेशादीनां प्रत्ययत्वसिद्धिः ।' 'अग्रही' दित्यादावीट इट्त्वसिद्धिश्च' ख. पाठः ।
६ ख. पाठः । क. तु कुण्डलितः । ग. नास्त्येव ।
७ एतदङ्कान्तस्थः क. पाठः । ख. नास्ति । ८ ख. पाठः ।
९ एतदङ्कान्तस्थः क. ग. पाठः । 'न' इति तु तत्र नास्ति ।

इदं फलितार्थकथनम् । पर्युदास एव सूचितः । वाक्यभेदाऽसमर्थ-समासाऽभावलाघवाऽनुरोधात् । अत एव 'शास्त्रीये कार्ये एवाऽयं स्थानिवद्भाव'इति, अत्र सूत्रे 'शास्त्रीयकार्यस्याऽभावाऽतिदेशो ने'ति सिद्धान्तः । अन्यथा 'नायक' इत्याद्यसिद्ध्यापत्तेः । अत एव 'किरतौ लवने' इत्यादिनिर्देशाः सङ्गच्छन्ते । ([1]अत एवाऽत्र यथेष्टवाक्यशेषाऽध्याहारो न) ।

न चैवम[2]पि इटो वलादित्वाऽऽश्रयतया 'बभूविवे'त्याद्यसिद्धिरिति वाच्यम् । प्रत्यासत्त्या यन्निमित्तवैकल्यप्रयुक्तोपदेशाऽप्रवृत्तावतिदेशो मृग्य[3]ते, तस्य निमित्तस्य स्थान्यलसाधारणधर्मत्वे एव निषेधप्रवृत्तेः । प्रकृते चाऽऽर्द्धधातुकवैकल्यप्रयुक्ताऽप्राप्तिः । न च तत्स्थान्यलसाधारणम् । यच्च तादृशं वलादित्वं, न तद्वैकल्यप्रयुक्ताऽप्राप्तिरिति बोध्यम् ।

([4]अत एव 'रामाये'त्यादौ यञादित्वनिमित्तकोऽपि 'ए'वृत्तिसुप्त्वमात्रा-ऽऽश्रयः 'सुपि चे'ति दीर्घः सिद्ध्यति । सुप्त्वं च न तदसाधारणम् । भ्या-मादिषु समुदायेऽपि सत्त्वात् ) । प्रत्यासत्तिन्यायात्, 'कष्टाये'ति ज्ञापका-च्चाऽलः स्थानित्वं, स्थानिसम्बन्धि[5]त्वं वा लभ्यते । इदमेवाऽभिप्रेत्य भाष्ये उक्तम्—'आदेशिन्यल्याश्रीयमाणे प्रतिषेध' इति ।

अत्र कार्यमतिदिश्यते, प्राधान्यात् । (का[6]र्यं च न जरसादिरूपमेव, किन्तु शास्त्रविहितं सुप्त्वाद्यपि) । त[7]त्राऽनपेक्षितशास्त्रम्, अनपेक्षितनिमित्तं च

---

१ क. ग. नास्ति । ख. पाठः ।

२ 'न च स्थान्यलाश्रितविधिभिन्नविधौ कर्त्तव्ये इत्यर्थेऽपि बभूविवेत्याद्यसिद्धि-रिति वाच्यम् ।' ख. पाठः ।

३ 'अतिदेशो मृग्यते, स्थान्यलसाधारणतन्निमित्तनिमित्तकविधिभिन्नविधावि-त्यर्थात् । अत एव रामायेत्यादौ' ख. पाठः । ४ ख. पाठः ।

५ क. ग. पाठः । ख. नास्ति । ६ क. ग. नास्ति ।

७ 'तत्राऽनपेक्षितनिमित्तं च कार्यमनेनैव क्रियते' ख. पाठः ।

कार्यमनेनैव क्रियते । यद्वाऽनपेक्षिताऽर्थसन्निधानस्तत्तन्निमित्तरूपकार्य-व्यवहार एवाऽनेन । कार्यन्तु स्वशास्त्रेणाऽर्थादेव सिद्धमिति ।

अत एव 'रामाये'त्यादौ स्थानिवद्भावेन याऽऽदेशस्य सुप्त्वा 'त्सुपि चे'ति दीर्घ' इत्यादि सङ्गच्छते । ( इनादीन्बाधित्वा परत्वाज्जरसिति च ) । एत-न्मूलकमेव पठ्यते-'अतिदिश्यमानकार्याणामुपदेशदेश एव देश'[1] इति । आद्यपक्षमभिप्रेत्य च 'शब्दाऽन्तरस्य प्राप्नुवन्विधि'रिति सङ्गच्छते इति बोध्यम् । यन्निमित्तवैकल्यप्रयुक्तोपदेशाऽप्रवृत्तावतिदेशो मृग्यते तन्निमित्तं शास्त्रीयमेव । प्रत्यासत्तेः । अत एव तासौ नित्याऽनिट्त्वस्याऽशास्त्रीयत्वात् 'थलि नित्यमि'डित्यादि सङ्गच्छते । अनल्विधाविति किम् ? । तेन तस्मात्तस्य तस्मिंश्च विधौ मा भूत् । 'व्यूढोरस्केन' 'द्यौः' 'द्युकामः' 'क इष्ट' इत्युदाहरणानि तत्र तत्र व्याख्यास्यन्ते[3] ।

नन्वादेशग्रहणं व्यर्थम् । 'षष्ठी स्थाने' इत्यनुवृत्त्या 'स्थाने[4] यः स स्थानिव'दित्यर्थेनैव सिद्धेः । 'स्थानिव'दित्युक्ते सम्बन्धिशब्दमहिम्नैव तल्लाभाच्च । न च 'पचत्वि'[5]त्यादा'वेरु'रित्याद्यनुमितानां तेस्त्वादीनामपि स्थानिवद्भावाय तत् । 'सर्वे सर्वपदादेशा' इत्यस्य सत्त्वेन तत्राऽपि स्थान्या-देशभावसत्त्वेनाऽक्षतेः । 'श्रौत एव स्थान्यादेशभावो ग्राह्य' इत्यत्र न मानम् । तदर्थज्ञापकेनाऽशेः[6] शित्त्वेनाऽत्र सूत्रे तद्ग्रहबोधनाच्च इति[7] चेन्न । मुख्याऽऽदेशग्रहणशङ्कावारणार्थत्वेनानुमानिकादेशग्रहणाथमादेश-ग्रहणस्य सत्त्वादिति स्पष्टं भाष्ये ।

यत्तु-एतन्मूलकमेव पठ्यते—यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते'

---

१ क. ग. नास्ति । २ 'देश इति' इत्यन्तोऽयं क. ग. पाठः । ख. नास्ति ।

३ 'व्याख्यास्यन्ते' इत्यन्तोऽयं क. ग. पाठः ।

४ 'स्थानार्थकषष्ठ्यन्तार्थस्य स्थाने यः, स स्थानिवत्' ख. पाठः ।

५ 'पचन्त्वित्यादौ' क. पाठः । ६ 'युष्मदस्मद्भ्यां ङसोऽशि'ति शित्त्वेनेत्यर्थः ।

७ 'स्पष्टं भाष्ये' इत्यन्तोऽयं क. ग. पाठः । ख. नास्ति ।

देशेन पदत्वात्पदान्तत्वप्रयुक्तोऽपि प्रकृतिभावो भवत्येव। ( न चैवमपि प्रातिपदिकत्वाऽऽपत्तौ सुबापत्तिः। तेनैवाऽतिदेशेन प्रत्ययान्तत्वात् )।

न चाऽत्र 'प्रकृतिवदनुकरणमि'त्येव सिद्धम्। 'त्वे राय'इत्यादावनुकार्ये फलाऽभावेन प्रगृह्यत्वाऽप्रवृत्तौ, तदनुकरणेऽतिदेशेनाऽसिद्धोपदेशप्रवृत्तेरेव वाच्यत्वात्।

**निपात**। निपात इति किम्?। अकारो वासुदेवः। हे अ–इदं पश्य = एदं पश्य। 'एकाजि'ति न बहुव्रीहिः। किन्तु कर्मधारयः। वर्त्तिपदार्थप्रधानत्वेनाऽन्तरङ्गत्वात्, 'व्याहरति मृग' इत्यादिनिर्देशाच्च। तेन 'प्रेदमि'त्यादौ न दोषः। तद् ध्वनयन्नाह—**एकोऽजिति**।

**आङ्वर्जं** इति। एतेन पर्युदासोऽयमिति ध्वनयति। अत एव 'एकाज् नाऽऽङि'ति नाऽसूत्रि। यत्तु–'नाऽयं पर्युदासः, किन्तु प्रसज्यप्रतिषेधः। 'आ उ = ओ'इत्यत्राऽऽङनाङोरेकादेशस्याऽनाङितिप्रतिषेधे प्राप्ते, प्रतिप्रसवाय 'ओदि'ति सूत्रमित्यर्थकेन 'प्रतिषिद्धार्थोऽयमारम्भ'इति भाष्यग्रन्थेन बोधितत्वात्। पर्युदासे[2] त्वनेनैव सिद्धौ भाष्याऽसङ्गतिः स्पष्टैव। 'अनाङि'ति पर्युदासेनैवाऽज्रूपत्वे, निपातत्वे च लब्धे निपातपदस्य, 'एकाच्'पदस्य च वैयर्थ्याऽऽपत्तिश्च। फले विशेषाच्च। तथा हि वासुदेवाऽऽदिवाचकाऽशब्दस्याऽऽङा सहाऽव्ययीभावे, आ आत्–अम्, ततः समासे[4], अम् इतः = 'एत' इति रूपं प्रसज्यप्रतिषेधपक्षे। तस्य पूर्वान्तवत्त्वेन[5], स्थानिवद्भावाद्वा[6] आङ्त्वेन प्रगृह्यत्वप्रतिषेधात्। पर्युदासपक्षे तु

---

१ ख. पाठः। क. ग. नास्ति।

२ 'पर्युदासे तु पूर्वसूत्रेणैव सिद्धौ' ख. पाठः।

३ वासुदेवादिवाचकस्य 'अ'शब्दस्येत्यर्थः।

४ 'ततस्तत्पुरुषे' ख. पाठः। ५ 'पूर्वान्तवत्त्वेन' इति ख. नाति।

६ 'तस्य स्थानिवद्भावादाङ्त्वेन' ख. पाठः।

स्वत आङ्भिन्नत्वेन, स्थानिवद्भावेन निपातत्वाच्च प्रगृह्यत्वं दुर्वारमेव । परा-ऽऽदिवत्त्वेनाङ्भिन्नत्वं तु न लभ्यम् । अशास्त्रीयत्वात् । एवम्–अमित्यादौ प्रगृह्यत्वादमि पूर्वत्वाऽनापत्तिः । पूर्वाऽन्तवत्त्वेन पदान्ततया प्रकृतिभावा'-दिति[1] । तन्न । 'अदोऽभवदि'त्यादिसिद्ध्यर्थं प्रतिपदोक्तौकारग्रहणेन, निपात[2]-समुदाये निपातत्वाऽभावेन च, 'ओषु यातमि'त्यत्र 'ओदि'त्यस्याऽप्राप्तेः, 'आहो' 'उताहो'[3]इत्यादेरखण्डनिपातत्वपक्षस्याऽपि भाष्ये उक्तत्वात्, पर्युदासेऽपि गम्यस्य प्रतिषेधस्य सत्त्वेन 'प्रतिषिद्धार्थ'इति भाष्याऽनुप-पत्त्यभावाच्च, लाघव-तर्क-सहितपर्युदासत्यागे मानाऽभावात् । आङ्त्वस्य पूर्वान्तवत्त्वेनातिदेशेऽतिदिश्यमानधर्मविरुद्धस्वा[4]ऽऽश्रयधर्मप्रयुक्तकार्य-स्य निवृत्तेरुक्तत्वेनाऽऽङ्भिन्नत्वाऽभावात्पर्युदासेऽपि 'एत' इत्यादौ क्षत्य-भावाच्च । 'विधिनिषेधयोरेकवाक्यतायामप्राप्त्यनुमानमेव बाध' इति 'क्ङिति चे'त्यादिसूत्रस्थकैयटाद्युक्तरीत्या एकवाक्यतायाः पर्युदासविधयैव वक्तव्यतया, तस्यां च सत्यां त्वदुक्तरीत्या 'सार्वधातुकमपि दि'त्याद्यति-देशविषये गुणाऽऽद्यापत्त्या, प्रसज्यप्रतिषेधपर्युदासयोरेवंजातीयफलविशे-षस्य [5]मदुक्तरीत्या वारणं सर्वेषामावश्यकम् ।

'अनाङि'तिपर्युदासादेव निपाते लब्धे, निपातग्रहणमुत्तरार्थमाव-श्यकं स्पष्टप्रतिपत्तये इहैव कृतम् । एकाज्ग्रहणन्तु एकाज्रूपनिपात-मात्रस्य प्रगृह्यत्वार्थम् । तेन गौणानाम्-'ई अभवदि'त्यादौ संज्ञासिद्धिः ।

[6]अत एव 'ङ्यन्तस्य प्रतिषेध'इतिवचनमोत्सूत्रे वार्त्तिककृताऽऽरब्धम् ।

---

१ 'पूर्वान्तवत्त्वेन पदत्वादिति' इति ख. पाठः ।

२ 'ओकारग्रहणस्य भाष्यकृतैवोक्तत्वेन ओषु यातमित्यत्र' ख. पाठः ।

३ 'आहो उताहो इत्यादेः' इति क. ग. पाठः । ख. नास्ति ।

४ 'धर्माऽविरुद्ध' इति ख. पाठः ।

५ 'फलविशेषस्य वक्तुमशक्यत्वादित्यपि कश्चित्' इति ख. पाठः ।

६ 'अत एव' इत्यारभ्य 'अच्त्वाभावात्' इत्यन्तः क. पाठः । ख. नास्ति । ग. तु मन्ये त्रुटितः ।

एकाच्प्रकृतिकच्व्यन्तानामनभिधाने तु स्पष्टार्थमेव ।

स्वाङ्गसमुदाये स्वाङ्गत्वाऽभाववदच्समुदायेऽच्त्वाऽभावात् 'अजि'त्येव तद्ग्रहणाऽभावे[1] सिद्धे, एकग्रहणमन्यत्र वर्णग्रहणे जातिग्रहणार्थम्[2]। तेन 'धिप्सती'त्यादिसिद्धिरिति भाष्ये स्पष्टम् । 'जातिग्रहणार्थमि'त्यस्योपात्त-जात्याश्रयैकाऽनेकव्यक्तिग्रहणार्थमित्यर्थः । तेन 'तितउ'शब्दैकदेशस्य 'अउ-'इत्यस्याऽनुकरणे 'अउ अकरोदि'त्यत्र'अनुकरणं चाऽनिती'ति निपातत्वेऽपि प्रगृह्यत्वाऽभाव इत्याहुः ।

यत्तु कैयटेनाऽच्समुदायग्रहणशङ्कानिरासार्थम्[3] । अन्यथा 'अइउ अपे-ही'त्यत्र समुदायैकाज्द्विर्वचनवत्समुदायस्यैव प्रगृह्यत्वं स्यान्नावयवानाम् । ( सिद्धान्ते[4] तु तक्रकौण्डिन्यन्यायाऽनित्यत्वात्प्रगृह्येऽपि परे प्रकृतिभावः ) इति । तन्न । समुदायसंज्ञयाऽवयवानामननुग्रहात् । उक्तरीत्या[5] निपात-समुदायस्य निपातग्रहणेनाऽग्रहणाच्च ।

ननु ङकारस्य काऽप्यश्रवणेन ङिदङिद्विवेको दुर्ज्ञेय इत्यत आह—**वाक्यस्मरणयोरिति** । वाक्यशब्देन वाक्याऽर्थगतमन्यथात्वमुच्यते । अन्यथात्वं चाऽनभिमतत्वमेव । पूर्वोदाहरणस्य-'पूर्वमेवं नाऽमंस्था, इदानीं त्वेवं मन्यसे' इत्यर्थः । ( एवं[6] पर्यवसाने हि पूर्वोक्ताऽर्थस्याऽनभिमतत्वं स्फुटमेवाऽवगम्यते ) । द्वितीये हि—विस्मृतस्य स्मृतिविषयता द्योत्यते । एवं किल तदिति—स्मृताऽर्थनिर्देशः । एवं च इतोऽन्यत्राऽङिदित्यर्थादुक्तं

---

१ 'तद्ग्रहणाऽभावे' इति ख. नास्ति ।

२ 'जातिग्रहणार्थम्' इत्यारभ्य 'ग्रहणार्थमित्यर्थः' इत्यन्तः पाठः ख. नास्ति ।

३ अस्य 'एकग्रहण'मिति शेषो बोध्यः ।

४ क. पुस्तके कुण्डलितोऽयं ख. पाठः । ग. तु नास्त्येव ।

५ 'उक्तरीत्या निपातसमुदायस्य निपातग्रहणेनाऽग्रहणाच्च' इति पाठः ख. नास्ति ।

६ ख. पाठः । क. ग. नास्ति ।

भवति ।

'निपात'इत्यनुवृत्तम् 'ओदि'त्यनेन विशेष्यते इत्याह—ओदन्त इति । ननु-अनदः अदः समभवत्, 'अदोऽभवत्, अगौगौः समभवत्-'गोऽभवदि'-त्यादौ प्रगृह्यसंज्ञा दुर्वारा । लक्षणप्रतिपदोक्तन्यायस्य, गौणमुख्यन्यायस्य च वर्णग्रहणेऽप्रवृत्तेरिति चेन्न[3] । निपात[2]सञ्ज्ञा हि चादिपदोपस्थितचादीनां सति सम्भवेऽर्थवतामेवेति, ये साऽर्थकास्तेषां निपातपदेनाऽपि तत्तदर्थ-विशिष्टानामेवोपस्थितिरिति,—प्रकृतसूत्रस्थनिपातपदेन मुख्याऽर्थकनिपाता-नामेव ग्रहणं, न तु गौणार्थकानामित्यदोषात् । वर्णग्रहणे हि तदप्रवृत्ता-वर्थाऽनुपस्थितिरेव बीजम् । तस्याश्चाऽत्राऽनुपस्थितेरसत्त्वात्तत्प्र[4]वृत्तेः सूप-पादत्वात् । एवञ्च[5] कार्यकालपक्षे 'ङ्यन्ता निपाता'इत्यस्याऽत्राऽनुपस्थितिः,

---

१ इतोऽग्रे—तदुक्तं भाष्ये—

'ईषदर्थे, क्रियायोगे, मर्यादाऽभिविधौ च यः ।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्' ॥

'मर्यादाऽभिविधा'वित्यत्र समाहारद्वन्द्वे 'आगमशासनस्याऽनित्यत्वान्नुम-भावः । मर्यादासहितेऽभिविधावित्यर्थो वा । अत्राऽङिल्लक्षण एव तात्प-र्यम् । अन्यस्य ङित्त्वं त्वर्थतो लब्धम् । 'ईषदर्थे'इत्यादिस्त्वयुत्याऽनुवादः । एवं च 'अभ्र आँ अप'इत्यत्र सप्तम्यर्थवृत्तेरप्याकारस्य निरुक्तोक्तस्य ङित्वा-'दाङोऽनुनासिक' इति भवति । अव्ययीभावाऽभावश्च छान्दसत्वादित्याहुः' इति ख. पाठोऽयं क. कुण्डलितः । ग. नास्ति ।

२ इतोऽग्रे—'निपात'इत्यनुवृत्त्याऽर्थवद्ग्रहणपरिभाषया चोपस्थितस्याऽर्थस्य गौणमुख्यन्यायेन मुख्यस्यैव ग्रहणात् । वर्णग्रहणे हि तदप्रवृत्तौ' इति ख. पाठः ।

३ 'निपातसंज्ञा हि' इत्यारभ्य 'इत्यदोषात्' इत्यन्तः क. ग. पाठः । ख. नास्ति । ४ 'प्रवृत्तिः सूपपादा' ख. पाठः ।

५ 'एवं च' इत्यारभ्य 'इति बोध्यम्' इत्यन्तः क. ग. पाठः । ख. नास्ति ।

एतत्परिभाषावशात्। अव्ययसंज्ञादौ तु नैतत्परिभाषाप्रवृत्तिः, अनित्यत्वादिति बोध्यम्। ध्वनितं चेदं भाष्ये।

सादृश्यसम्बन्धेन प्रवृत्तिश्च-गौणत्वम्[1]। तत्रैव च्वेः साधुत्वस्य तद्विधायके वक्ष्यमाणत्वात्[2]। अनर्थकेऽपि[3] निपाते तत्कार्यं भवत्येव। तेषामपि निपातपदेनोपस्थितेरिति दिक्।

निपातः किम्?। देवोऽसि। वायवायाहि।

सम्बुद्धौ। यद्यपि 'सम्बुद्धिपरौकारस्ये'त्यपि व्याख्यातुं शक्यम्, 'तस्मिन्नि'तिपरिभाषाबाधे मानाऽभावादुचितं च, तथाऽपि 'त्रपो इती'त्यादौ प्रगृह्यत्वं यथा स्यादित्येतदर्थं निमित्तत्वेन व्याख्यातम्। तत्र सोर्लुका लुप्तत्वेन सम्बुद्धिपरत्वाऽभावात्। 'न लुमते'ति निषेधाऽनित्यत्वन्तु अगतिकगतिरित्याहुः।

इताविति किम्?। पटोऽत्र। अनार्षे किम्?। 'ब्रह्मबन्धवित्यब्रवीत्'। वस्तुतो वेदे आपाद्यरूपाऽभावात्, सिद्धरूपस्य च विकल्पप्रवृत्तावपि

---

१ 'गौणत्वात्' ख. पाठः।

२ इतोऽग्रे-'प्रतिपदिकसंज्ञाविधौ तु महासंज्ञाकरणेन बोधकमात्रे तत्संज्ञाप्रवृत्तेर्नैतन्न्यायप्रवृत्तिः। अत एव 'अत इञि'त्यादावपि न प्रवृत्तिः। निपातपदस्य च-'निपतन्त्यनेकेष्वर्थेष्वि'ति, 'निपातयन्ति वा स्वार्थमन्यस्मिन्नि'ति योगेनाऽर्थोपस्थापकत्वम्।

यद्यप्यन्यत्र निपातग्रहणे [1]सर्वग्रहणमिष्यते, तथाऽपीह शब्दाऽधिकारमाश्रित्य भाष्यप्रामाण्येनाऽर्थवत्परिभाषा प्रवर्त्तते एव। अत एव 'निपात'-इति सूत्रं विहाय-'ओदि'ति सूत्रे एव 'ओतश्चऽयन्तस्य प्रतिषेध' इति वार्त्तिकाऽऽरम्भ इति दिक्'-इति ख. पाठः।

३ 'अनर्थके' इत्यारभ्य 'इति दिक्' इत्यन्तः क. ग. पाठः। ख. नास्ति।

---

1 अर्थवदनर्थकमात्रग्रहणमित्यर्थः।

सिद्धत्वाद्व्यर्थमनार्षग्रहणमित्याहुः ।

ऋषिर्वेदः । 'तदुक्तमृषिणे'त्यादौ तथा दर्शनात् ।

नन्विदं सूत्रं व्यर्थम् । संहिताया अविवक्षायां 'विष्णो इति' इत्यस्य सिद्धेः । समासे त्वस्याऽप्रवृत्तिरेव । तत्र हि सुब्लुकि तन्निमित्तौकाराऽभावात्, सम्बुद्ध्यन्तेन प्रायः समासाऽभावाच्चेति चेन्न । अर्द्धमात्राकालस्य वर्णोच्चारणे नियतत्वेन, तदधिककालव्यवायाऽभावः संहिता । तस्या अविवक्षा नाम तदधिककालव्यवायेन वर्णानामुच्चारणविवक्षा । अधिकः कालोऽपि न यथेच्छं, किन्त्वर्द्धमात्राकाल एवं । अत एव 'मुहूर्त्ताऽऽदिव्यवधाने न साधुत्वं, नाऽप्यर्थबोध इति वृद्धाः । एवं च मात्राकालव्यवाये संहिताया अविवक्षणेन साधुत्वे सिद्धेऽपि, अर्द्धमात्राकालव्यवायेनोच्चारणेऽवादिरहितप्रयोगाऽर्थं सूत्रस्याऽऽवश्यकत्वात् ।

न चैवं 'मयूररोमभिरि'त्यादाववग्रहे संहितानित्यत्वव्याघातः । इष्टाऽऽपत्तेः । अवग्रहेण विशेषविहितेन स्वविषये संहितानित्यत्वस्य बाधात् । वर्णोच्चारणे स्वाभाविकाऽर्द्धमात्राकालापेक्षयाऽधिकोऽर्द्धमात्राकालो ह्यवग्रह इत्याहुः[1] ।

---

१ 'इतोऽग्रे 'यत्तु—'गावित्ययमाहे'ति इह सम्बुद्धिग्रहणस्य, 'ओदि'त्यत्रनिपाताऽनुवृत्तेश्च प्रत्युदाहरणम् ।

ननु 'प्लुतप्रगृह्या'इति सूत्रे 'पदान्ता'इति सम्बध्यते । अन्यथा 'इकोऽसवर्णे'इत्यादौ मण्डूकाऽनुवृत्त्यापत्तेः । मण्डूकाऽनुवृत्तिश्च—सम्बन्ध-तदभावोभयकल्पनाऽऽपत्त्या अन्याय्या । प्रकृते च न पदान्तत्वम् । अनु-कार्यानुकरणयोरभेदविवक्षयाऽर्थवत्त्वाऽभावेन विभक्त्यनुत्पत्तेः । अत एव तस्याः श्रवणं न । अभेदविवक्षा नाम सादृश्यसम्बन्धेनोपस्थापकत्वम् । एवञ्च वृत्त्याऽर्थबोधकत्वाऽभावात्प्रातिपादिकत्वाऽभावः स्पष्ट एव । अर्थबोध-कत्व-तदभावाभ्यां भेदस्य सत्त्वेन सादृश्याऽनुपपत्तिः ।

न च लिङ्गसर्वनामनपुंसकताऽभ्युपगमेन लुका निर्वाहः । ह्रस्वाऽऽपत्तेः । न च 'नैकधे'तिवत्'सुप्सुपे'ति समासेन निस्तारः । 'इति'शब्दस्य—(शब्द-

सम्बुद्धौ किम् । 'अहो इती'त्यादावेव परत्वाद्विकल्पो माभूदितीत्युक्तम् ।

स्वरूपपरतातात्पर्यग्राहकत्वेन तेनैकार्थीभावरूपसामर्थ्यस्य दुरुपपादत्वात् । इतिशब्दस्य- ) प्रकाराऽर्थताया वक्ष्यमाणत्वेनोपसर्जनत्वात्पूर्वनिपाताऽऽपत्तेरिति चेन्न ।

'गोभ्याम्' 'गोक्षीर'मित्यादिलक्ष्यवर्त्ति'गो'शब्दाऽनुकरणे 'प्रकृतिवदनुकरणं भवती'त्यतिदेशेन पदत्वस्य सुलभत्वादि'ति । तन्न । अतिदेशस्याऽनित्यतया तदप्रवृत्तिमाश्रित्याऽपि सुसाधत्वेनाऽसाधारणप्रयोजनत्वाऽभावादिति केचित्[1] ।

परे[2] तु तदतिदेशस्याऽनित्यत्वे मानाऽभावः । 'यत्तदेतेभ्य' इत्यादावेकशेषस्त्वनुकार्यस्वरूपभङ्गभिया न कृतः, 'झलां जश् झशी'त्यादौ जश्त्वाऽऽदिवत् । 'जेः' 'किरः' इत्यादौ विभक्तिस्तु सौत्रत्वादेवेत्याहुः । तन्न । 'श्नियो दीर्घा'दिति सूत्रेऽष्टमे तदनित्यत्वस्य स्पष्टत्वात् ।

[3]'यत्तदेतेभ्य' इत्यादेर्ज्ञापकस्य विशेषाऽपेक्षत्वेन, वतिना सादृश्यस्य भेदघटितस्य बोधनेन च, भेदविवक्षायामेवाऽतिदेशप्रवृत्तेश्च । सा चेहाऽशक्या । विभक्तिश्रवणाऽऽपत्तेः । अत एव इनाऽऽतोः प्रत्याख्यानपरभाष्येण न विरोधः । अन्यथा 'नाऽऽदेशे 'रामेणे'त्येकादेशभूत'रामे'इत्यनुकरणे,'रामे' इत्यादावयादेशे, अतिदेशात्पदत्वेन पक्षे लोपः स्यात्, सूत्रमते नेति फलभेदात्तदसङ्गतिः स्पष्टैव । एतेना'ऽनुकार्याऽनुकरणयोरभेदादेव पदत्वलाभ' इत्यपास्तम् । अभेदबोधनेन भेदप्रयुक्ताऽर्थवत्त्वनिमित्तप्रातिपदिकत्वाऽभावेऽपि, शब्दाऽन्तरनिष्ठधर्मवैशिष्ट्यस्य बोधयितुमशक्यत्वात् । 'सम्बुद्धा'विति तु 'अहो इती'त्यादौ परत्वाद्विकल्पप्रवृत्त्यभावाऽर्थमित्युक्तमेवेति दिक् ।

१ इत आरभ्य 'इतीत्युक्तम्' इत्यन्तः क. पाठः । ख. तु अग्रे वर्त्तते । सच टिप्पण्यां द्रष्टव्यः । २ 'परत्वाद्विकल्पः' इति मनोरमापाठः ।

---

1 'इति केचि'दिति ख. नास्ति । क. कुण्डलितः ।
2 'परे तु'इत्यारभ्य 'तदनित्यत्वस्य स्पष्टत्वात्' इत्यन्तः ग्रन्थः ख. नास्ति ।
3 'यत्तदेतेभ्य'इत्यारभ्य 'इत्युक्तमेवेति दिक्' इत्यन्तो ग्रन्थः ख. पाठः ।

'उञि'ति न प्रत्याहारः । 'उञ्'ग्रहणसामर्थ्यात्[1]। अन्यथा हल्षु विशेषाऽभावादुज्ग्रहणमेव कुर्यात्। उञ्निपाते ञकारोच्चारणसामर्थ्याच्च ।

'उञ ऊँ' इत्येकसूत्रत्वे तु-शाकल्यग्रहणाऽननुवृत्तौ 'ऊँ इती'त्येकमेव स्यात्। प्रगृह्यसंज्ञाप्रकरणे पाठेन त[2]द्विशिष्टस्यैव विधानात्। स्थानिवद्भावेन 'निपात एकाऽजि'ति प्रगृह्यत्वाच्च[3]। 'उ इति', 'विती'ति च न स्यात्।

तद[4]नुवृत्तौ—आदेशाऽभावे 'निपात एके'ति प्रगृह्यत्वेन, 'उ इती'ति सिद्धावपि, 'विती'त्यस्याऽनापत्तिः ।

न च 'उ इती'तिरूपस्य निरनुबन्धकोकारमादाय सिद्धत्वेन, शाकल्याऽनुवृत्तिसामर्थ्यात्पक्षे 'विती'ति भविष्यतीति वाच्यम्। 'उ इती'त्यतः साऽनुबन्धकबोधस्याऽपीष्टत्वेन तदनापत्तेः[5] । किञ्च[6] मयः परत्वे-'किम्विती'त्यादौ मकारसहितवकारघटितरूपाऽसिद्धिः। तदनुवृत्तिसामर्थ्या-न्निपात'इति प्रगृह्यत्वाऽभावेऽपि, 'मय' इतिवत्वाऽसिद्धत्वेनेको यणचीति वत्वेऽनुस्वाराऽऽपत्तेः। यद्वाऽनेन प्रकरणात्प्रगृह्यसंज्ञस्य 'ऊँ'आदेशस्य विधानेनाऽस्य 'निपात'इति प्रगृह्यसंज्ञापवादत्वादेतदादेशविकल्पे, 'ऊँ इति', 'विती'ति च सिध्यति, न तु 'उ इति' । अतो योगविभागेन व्याचष्टे-उञ इति । 'उञो वाचकं प्रगृह्यपदमि'त्यर्थः । 'शाकल्यस्य इतौ प्रगृह्यमि'-

---

१ 'उञ्प्रत्याहारं विहाय उच्प्रत्याहारेणैव व्यवहरेदित्यर्थः ।

२ 'तस्या अपि विधानात्' ख. पाठः ।

३ इतोऽग्रे—'न च दीर्घोच्चारणसामर्थ्याद्यणाद्यभावः। असंहितायां चरितार्थत्वात्'—इति ख. पाठः ।

४ शाकल्यपदानुवृत्तावित्यर्थः ।

५ इतोऽग्रे—'फलान्तरमपि भाष्यप्रदीपोद्द्योते निरूपितम्'—इति ख. पाठः ।

६ 'किञ्च मयः' इत आरभ्य 'उ इति' इत्यन्तोऽयं ग्रन्थः क. ग. पाठः । ख. नास्ति ।

त्यनुवर्त्तते । तदाह—उञ इतौ वेत्यादि । विकल्पाऽननुवृत्तौ हि 'निपात एके'त्येव सिद्धे इदं व्यर्थमेव स्यात् । एवं च प्राप्तविभाषेयम् ।

१ 'वाग्रहणाननुवृत्तौ' ख. पाठः ।

२ इतोऽग्रे—'ननु योगविभागेऽपि 'ऊँ'इति सूत्रे 'शाकल्यस्य','प्रगृह्यस्ये'त्युभयमपि नाऽनुवर्त्त्यम् । 'उञ' इति विकल्पस्तु सामर्थ्यादादेश एव तत्कार्यप्रवृत्त्या, 'ऊँ इति' 'विति'इतिरूपद्वयाऽर्थं भविष्यति । आदेशस्य स्थानिवत्त्वेन प्रकृतिभावाऽपवादभूत'मय उञ' इत्यनेनाऽऽन्तरतम्यादनुनासिकवकारस्य सुलभत्वेन,'किम्वँती'त्यपि सिद्धमिति चेन्न ।

प्रगृह्यत्व-तदभावयोरुभयत्राऽऽप्यादेशाऽऽपत्तौ, 'उ इती'त्यस्य, निरनुनासिकवकारघटित'विती'त्यस्य चाऽनापत्तेः ।

किञ्चाऽप्रगृह्यत्वपक्षे 'ऊँ'आदेशे, 'इको यणची'ति यणि, मयः परत्वेऽनुस्वारसहितसाऽनुनासिकवकारघटितरूपप्रसङ्गात् । एतेन 'अत्र प्रगृह्यग्रहणमात्रमनुवर्त्तते' इत्यपास्तम् । एवं हि 'उञ' इत्यनेन पक्षे कृतप्रगृह्यस्यैव 'ऊँ'आदेशः स्यात् । तथा च प्रगृह्यत्वाऽभावे आदेशाऽभावादिको यणित्यनेन यणि,'विती'त्यस्य सिद्धावपि, उञर्थक—'उ इति' इत्यस्य, मयः परत्वेमकारसहितनिरनुनासिकवकारघटितरूपस्य चाऽसिद्धेस्तदवस्थत्वात् ।

न च 'प्रगृह्यमि'त्यस्य प्रथमान्ततया आदेशेनैव तत्सम्बन्धः स्यादिति वाच्यम् । एवं हि उञ्मात्रस्य नित्यं प्रगृह्यसंज्ञक—'ऊँ'भावविधाने योगविभागस्य वैयर्थ्याऽऽपत्तेः ।

न च शाकल्यग्रहणमात्रमनुवर्त्तताम् । 'उञ'इत्यनेन 'उ इती'त्यस्य, 'विती'त्यस्य च सिद्धेः । 'ऊँ'आदेशस्याऽपि वैकल्पिकत्वात् । न च 'शाकल्यस्यैव प्रगृह्यत्वं, तस्यैव च तेनाऽऽदेश' इति तयोरेकप्रयोगे एव प्रवृत्तिः स्यात् । योगविभागसामर्थ्येन शाकल्यमते एव भावाऽभावकल्पनात् । तदुक्तं भाष्ये'ऊँ वा शाकल्यस्ये'ति । मयः परत्वे प्रगृह्यत्वपक्षे, आदेशाऽभावे च मकारसहितनिरनुनासिकस्यापि सिद्धेरिति वाच्यम् । मयः परत्वेऽप्रगृह्य-

ऊँ । अत्र 'शाकल्य' 'प्रगृह्य'पदयोरसम्बन्धे 'उञ' इत्यर्थाधिकारादप्रगृह्यस्यैवादेशे तस्य'इको यणि'ति यणि, 'ऊँ इती'त्यस्याऽसिद्धिः । दीर्घोच्चारणवैयर्थ्याऽऽपत्तिश्च । विकल्पमात्रसम्बन्धेऽपि 'ऊँ इती'त्यस्याऽसिद्धिरेव । तथा 'प्रगृह्य'पदमात्रसम्बन्धेऽप्रगृह्यस्य नित्ये 'ऊँ'आदेशे, 'ऊँ इती'ति, प्रगृह्यस्य 'उ इती'ति सिद्धेऽपि, 'विती'ति न सिद्ध्येत् । योगविभागवैयर्थ्याऽऽपत्तेश्च । तस्माद्योगविभाग-दीर्घोच्चारणसामर्थ्याद् द्वयोरपि सम्बन्धः ।

यत्तूभयाऽसम्बन्धे, प्रगृह्यपदमात्राऽसम्बन्धे वा प्रगृह्याऽप्रगृह्योञ्मात्रस्यादेशाऽऽपत्तिरुक्ता । तच्चिन्त्यम् । अर्थाऽधिकारस्योचितत्वात् । तदाह-उञ इतौ दीर्घो नुनेत्यादि । अत्र विशिष्टविधिर्बोध्य इति न वाक्यभेदाऽऽपत्तिर्दोषः । न च शाकल्यस्यैव प्रगृह्यत्वम्, तस्यैव च मते आदेश इति तयोरेकप्रयोग एव प्रवृत्तिः स्यादिति वाच्यम् । योगविभागसामर्थ्येन शाकल्यमत एव भावाऽभावकल्पनात् । तदुक्तं भाष्ये—'ऊँ वा शाकल्यस्ये'ति ।

( इहं मय उञ इतौ पञ्च रूपाणि–(१) 'ऊँ'आदेशे 'मय उञ' इति वत्वे मकारसहितसानुनासिकवकारोपेतमेकं–'किम्वँतीति । (२) वत्वा-

---

त्वपक्षेऽपि संहिताऽनिमित्तत्वेनाऽन्तरङ्गत्वात् 'ऊँ'आदेशे, तस्य प्रगृह्यत्वाऽभावेनेको यणचीत्यस्याऽऽपत्तावनुस्वारघटितसाऽनुनासिकवकारघटितरूपाऽऽपत्तेः । किञ्च 'इकोऽसवर्णे'इति पाक्षिकह्रस्वप्रसङ्ग इत्याशयेनाऽऽह— उञ इतौ दीर्घोऽनुनेत्यादि ।

न च विधेयाऽनेकत्वे वाक्यभेदः, 'तद्वाक्यविधेयस्य तद्वाक्यविधेयाऽन्तरे उद्देश्यत्वाऽभाव'इत्यर्थस्य'अनुदात्तं सर्वमपादादा'विति सूत्रस्थ-'सर्व'-ग्रहणेन ज्ञापयिष्यमाणत्वादसम्भवश्चेति वाच्यम् । विशिष्टविधेः सत्त्वेनाऽदोषात्'—इति ख. पाठः ।

१ 'अत्र शाकल्यप्रगृह्यपदयोः'इत्यारभ्य 'किं वितीति' इत्यन्तः क. ग. पाठः । ख. नास्ति । ख. तु भिन्नोऽत्र पाठः ।

२ क. कुण्डलितः पाठः । ख. ग. नास्ति ।

ऽभावे-'किमूँ इती'ति। (३) 'ऊँ'आदेशाऽभावे प्रगृह्यत्वे (वत्वपक्षे) मकारसहितनिरनुनासिकवकारोपेतं 'किम्विती'ति। (४) तदभावे 'किमु इतीति'। (५) प्रगृह्यत्वाऽभावे'मय उञ' इत्यस्याऽसिद्धत्वा'दिको यणि'ति यणि, (तस्य यणः सिद्धत्वात्-) अनुस्वारेऽनुस्वारसहितनिरनुनासिकवकार-घटितं 'किं विती'ति)।

मय उञो। अत्र[2] व्याख्यानान्न 'मय'धातोर्ग्रहणम्। तद् ध्वनयन्नाह—किम्वुक्तमिति। 'प्लुतप्रगृह्या' इत्यनेन तु नाऽस्य बाधः। त्रिपादीस्थत्वेनाऽसिद्धत्वात्। नाऽनुस्वार इति। प्रगृह्यसंज्ञाऽभावे वत्वस्याऽसिद्धत्वा-'दिको यणि'ति यणि, अनुस्वारो भवत्येव[3]। यणो[4] बहिरङ्गाऽसिद्धत्वन्तु न।

---

१ वत्वाऽभावे 'उञ'इति प्रगृह्यत्वे इत्यर्थः।

२ 'अत्र बहुलक्ष्यसंस्कारानुरोधान्न मयधातोर्ग्रहणम्' ख. पाठः।

३ एतदग्रे—'न च बहिरङ्गपरिभाषया यणोऽसिद्धत्वम्। त्रैपादिके बहिरङ्गपरिभाषाया अप्रवृत्तेः। अत्र चेको यणित्यस्याऽनन्तरं 'मय उञो वे'ति पठितव्ये त्रिपाद्यामेतत्सूत्रकरणं मानम्। न च तथा न्यासेऽपि सन्निपातपरिभाषयाऽनुस्वारो दुर्लभः। अनुस्वारस्याऽसिद्धत्वेन [1]सन्निपातविघाताऽभावात्—इति ख. पाठः।

४ 'यण' इति क. ग. नास्ति। इत आरभ्य च 'एतत्सूत्रकरणात्' इत्यन्तः क. पाठः।

'बहिरङ्गाऽसिद्धत्वं तु न। त्रैपादिकेऽन्तरङ्गे 'प्लुतप्रगृह्या'इत्यस्याऽनन्तरं'मय उञो वे'ति पठितव्ये त्रिपाद्यामेतत्सूत्रकरणात्' इति तु ग. पाठः।

---

1 अस्य ख.पाठस्य खण्डनं ग्रन्थकारेणैव 'अनुस्वारस्याऽसिद्धत्वेन संनिपातविघाताऽभाव' इति तु न युक्तम्। पूर्वत्रेति सप्तमीनिर्देशेन पूर्वत्र कर्तव्येऽसिद्धत्वेऽपि, कृते तस्मिन्परस्याऽसिद्धत्वाऽलाभात्'इत्यादिग्रन्थेन क. पुस्तकपाठे कृतमिति सुधीभिर्विभावनीयम्।

त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाया अप्रवृत्तेः। 'इको यणि'त्यस्यानन्तरं 'मय उञो वे'ति पठितव्ये त्रिपाद्यामेतत्सूत्रकरणात्।

न[1] चेको यणित्युत्तरं तथान्यासेऽपि संनिपातपरिभाषयाऽनुस्वारो दुर्लभः। तदाऽनेनं[2] प्रकृतिभावबाधे बोधिते, 'इक'इत्यनेन यणि प्राप्तेऽस्य[3] प्राप्तविभाषात्वेनाऽभावे एव तात्पर्येण, वस्य[4] तत्संनिपातलक्षणत्वाऽभावात्। 'अनुस्वारस्याऽसिद्धत्वेन संनिपातविघाताऽभाव'इति तु न युक्तम्। 'पूर्वत्रे'ति सप्तमीनिर्देशेन पूर्वत्र कर्त्तव्येऽसिद्धत्वेऽपि, कृते तस्मिन् परस्याऽसिद्धत्वाऽलाभात्।

किञ्चाऽऽतिदेशिकसंनिपातविघाताऽभावमादायैतदप्रवृत्तौ[5] 'गौरी'त्यादौ सम्बुद्धिलोपेऽपि, स्थानिवत्त्वेन ह्रस्वनिमित्तविघाताऽभावात्तत्रैतस्या[6] अतिव्याप्तिपरभाष्याऽसङ्गतिः। संनिपातस्याऽशास्त्रीयत्वान्नाऽत्र स्थानिवत्त्वमिति चेत्। असिद्धत्वस्याऽपि कथमशास्त्रीये प्रवृत्तिरिति तुल्यम्। अशास्त्रीयेऽसिद्धत्वाऽप्रवृत्तिरपीदूदेदिति सूत्रे कैयटेन स्पष्टमुक्ता।

तस्माद्यदि त्रिपादीस्थे संनिपातपरिभाषाप्रवृत्तिरिष्टा तर्ह्यनित्यत्वादेव, न तूक्तयुक्त्येति सारम्। अत एव 'गव्यिते'त्यादौ संनिपातपरिभाषया यलोपो न। अन्यथा तृज्निमित्तकलोपस्य बहिरङ्गत्वेनाऽसिद्धत्वादिहैव एतत्परिभाषाप्रवृत्तिर्न स्यादिति दिक्।

ननु'यः शिष्यते स लुप्यमानाऽर्थाभिधायी'ति न्यायेन 'गौरी'शब्दस्य सप्तम्यर्थवृत्तित्वेऽपीकारस्य तत्त्वाऽभावः। (तस्य[7] सप्तम्यप्रकृतित्वेन सप्तम्यर्थाऽनन्वितत्वात्) अत आह—ईदूदन्तमिति।

---

१ 'न चेको यणित्युत्तरम्' इत्यारभ्य 'स्यादिति दिक्'इत्यन्तः क. कुण्डलितः पाठः। ख. ग. नास्ति। २ 'मय उञ' इत्यनेनेत्यर्थः।

३ 'मय उञो वे'त्यस्येत्यर्थः। ४ 'इको यणची'तिविहितस्येत्यर्थः।

५ संनिपातपरिभाषाया अप्रवृत्तावित्यर्थः। ६ सम्बुद्धिपरत्वरूपह्रस्वनिमित्तविघाताभावादित्यर्थः। ७ ख. पाठः। क. कुण्डलितः। ग. नास्ति।

'सप्तम्यर्थे' इत्युपात्ताऽर्थोऽऽक्षिप्त—तद्वाचकशब्दस्य विशेष्यत्वात्तदन्तविधिरिति भावः ।

**मामकी तनू इति** । यद्यप्यत्र संहितायां प्रगृह्यत्वस्य न प्रयोजनं, तथाऽपि पदकाले बोध्यम् । प्रगृह्येषु 'इति'शब्दप्रयोगस्य पदकारैर्नियमितत्वात् । ईदूतौ किम् ? । अग्ना भवाति । सप्तम्या डाऽऽदेशः । अत्राऽग्ना इत्यस्य प्रगृह्यत्वे सति 'इति'शब्दप्रयोगः स्यात् पदकाले ।

तपरत्वमसन्देहाय । सप्तमीग्रहणं किम् ? । 'धीती' 'मती' । ह्रस्वाऽन्तेभ्यस्तृतीयैकवचनस्य पूर्वसवर्णे सवर्णदीर्घः ।

**वृत्तावर्थान्तरे इति** । नन्वत्र वाप्यादिपदानामाधेयाऽश्वरूपाऽर्थवृत्तित्वेऽपि 'अधिकं तु प्रविष्टं, न तु तद्धानिरि'ति न्यायेन सप्तम्यर्थवृत्तित्वाऽनपायात्प्रगृह्यसंज्ञा दुर्वारा । न चाऽर्थग्रहणसामर्थ्यात्सप्तम्यर्थमात्रे पर्यवसन्नमित्यर्थः । अत्र च न सप्तम्यर्थोऽधिकरणमात्रे'वापी'पदं पर्यवस्यति, किन्तु तत्संसृष्टाऽऽधेयाऽर्थे इति न दोष इति वाच्यम् । अर्थग्रहणाऽभावे 'ईदूदेति'वदीदूदन्ता या सप्तमीत्यर्थोऽऽपत्तिः । तथा च 'पपी' इत्यादावेव स्यात्, एकाऽऽदेशस्य पराऽऽदिवद्भावेन सप्तमीत्वात् । न तु 'गौरी'त्यादौ । तथा च तत्सिद्ध्यर्थमर्थग्रहणस्याऽऽवश्यकत्वात् । न च 'संज्ञायामि'तिसमासे[1] जहत्स्वार्थायां वृत्ताववयवानामानर्थक्येन सप्तम्यर्थवृत्तित्वाऽभावान्न दोष इति वाच्यम्[2] । 'सुप्सुपे'[3]तिसमासेऽजहत्स्वार्थायां दोषाऽऽपत्तेरिति चेन्न ।

---

१ 'संज्ञायामिति समासे' इति क. ग. पाठः । ख. नास्ति ।

२ 'न दोष इति वाच्यम् । 'अजहत्स्वार्थायां च न दोषः । समुदायाऽर्थोऽभिधीयते' इति भाष्यविरोधाऽऽपत्तेरिति चेन्न । ऊकारसाहचर्येण,'ईदूता'वित्यत्र दीर्घेण ईकाराद्यन्तरप्रश्लेषेण वा तत्सिद्धावर्थग्रहणसामर्थ्यस्य सूपपादत्वात्'—इति ख. पाठः ।

३ 'सुप्सुपेति समासेऽजहत्स्वार्थायां दोषापत्तेरिति चेन्न' इति—क. ग. पाठोऽयम् । ख. नास्ति ।

'ईदूतौ सप्तमी प्रगृह्यम्' । 'अदसः' । 'एच्च द्विवचनमि'त्येव सिद्धे गुरुभूतन्यासकरणेन तत्प्रकरणाऽपेक्षया वैजात्यबोधना'त्संज्ञाविधावि'ति-तदन्तग्रहणनिषेधाऽप्रवृत्त्या 'ईदूदन्तं सप्तम्यन्तमि'त्यर्थेनेष्टसिद्धावर्थग्रहणेन प्रागुक्ताऽर्थबोधनेनाऽदोषात्[1] । तदुक्तं[2] भाष्ये-'अजहत्स्वार्थायां च न दोषः । समुदायार्थोऽभिधीयते' इति ।

न चाऽर्थग्रहणं[3] 'बहुश्रेयसीकुलमधिष्ठित' इत्यर्थके 'बहुश्रेयसी अधिष्ठित' इत्यत्र प्रगृह्यसंज्ञाऽर्थमावश्यकम्, तत्र सप्तम्यर्थाऽऽधारस्यैव द्वितीयाऽर्थत्वादिति वाच्यम्। नपुंसकह्रस्वत्वेन तादृशरूपस्यैव दुर्लभत्वात् ।

किञ्च 'इकोऽची'त्यज्ग्रहणेन 'न लुमते'ति निषेधाऽनित्यज्ञापनेन, तद्विषये तदप्रवृत्त्या, द्वितीयाऽमो लुक्यपि,नुमि,नलोपे, तस्य संज्ञाविधावसिद्धतया, ईकारान्तत्वाऽभावात्तत्राऽप्राप्तेः । न च 'वातप्रमीश्वर'इत्यत्र 'स्वामीश्वरे'त्यनेन षष्ठीसप्तम्योर्विधानेन, षष्ठ्याः 'सुपां सुलुगि'ति लुकि, प्रगृह्यत्वाऽर्थमर्थग्रहणम् । भाष्यप्रामाण्येन वेदे तादृशप्रयोगाऽभावात् । सत्त्वेऽपि सप्तम्यैव तादृशप्रयोगनिर्वाहात् । वेदे आपाद्यरूपाऽभावात् । लोके तु सप्तम्यन्तत्वे भवत्येव प्रगृह्यत्वम् । षष्ठ्यान्तु तादृशं रूपं दुर्लभमित्याहुः । लोपद्वारेण लक्षणाया एवाऽन्वाख्यानाद्गौर्यादिपदानां सप्तम्यर्थपर्यवसन्नत्वम् ।

नन्वेवं 'गौरी अधिश्रित' इत्यादौ विरुद्धविभक्तिरहितनामाऽर्थतया भेदेनाऽन्वयाऽयोगादभेदाऽन्वयाय गौर्यादिपदानां तदधिकरणके लक्षणाया आवश्यकत्वेन सप्तम्यर्थमात्रपर्यवसन्नत्वाऽभावः । 'लुप्तस्मरणा-

---

[1] 'अदोषाच्च' ख. पाठः ।

[2] 'तदुक्तं भाष्ये—अजहत्स्वार्थायां च न दोषः । समुदायार्थोऽभिधायते इति' इति पाठोऽत्र ख. नास्ति। पूर्वं तु वर्त्तते, स च २४६ पृष्ठे टिप्पण्यां द्रष्टव्यः ।

[3] 'अर्थग्रहणं च' ख. पाठः ।

च्छाब्दबोध'इतिवादिनां मते सप्तम्यर्थपर्यवसन्नत्वस्यैवाऽभाव इति चेन्न[1]। अधिश्रयणक्रियायामेव[2] गौरीपदार्थबोध्याऽधिकरणत्वस्याऽन्वय इति गौर्यधिकरणके लक्षणायां मानाऽभावात्।

वाप्यश्व इति। 'संज्ञायामि'ति समास इति प्रकृतसूत्रे कैयटः। ननु वाक्येन संज्ञाऽनवगमादस्य नित्यसमासतया[3] विग्रहो नोचित इति चेन्न। तेषु समाससमानाऽर्थवाक्याऽभावेन नित्यसमाससदृशत्वेन नित्यसमासत्वोक्तेः। नैतावता विभाषाऽधिकारबाधे मानमस्ति। नित्यसमासे हि वृत्तिघटकपदानां पृथक् प्रयोगाऽभाव एव। अत्र तु पृथक्प्रयोगेऽपि तद्बोध्यविशिष्टाऽर्थाऽप्रतीतिमात्रम्। ध्वनितं चेदं 'द्वितीयतृतीये'तिसूत्रे भाष्ये इति समासे निरूपयिष्यामः।

'सुप्सुपे'ति समासोऽत्रे'ति 'इकोऽसवर्णे'इत्यत्र कैयटः। 'न समासे'-

---

१ 'इति चेन्न। 'राज्ञो देवदत्तस्य यज्ञदत्त' इत्यादौ प्रकारद्वयेनाऽप्यन्वयस्य दर्शनेन, सप्तम्यर्थमात्रलक्षणया भेदेनाऽन्वये बाधकाऽभावात्। भेदाऽभेदाऽन्वयबोधे च तात्पर्यमेव नियामकमित्याहुः।

अपरे तु एवं हि 'वाप्यश्व' इत्यत्राऽपि प्रगृह्यत्वव्यावृत्तिः, विशेषश्च दुर्वचः। तस्मात्सप्तम्यर्थमात्रपर्यवसन्नत्वमत्र वचनसामर्थ्यात्, भाष्याऽऽदिबलाच्च समभिव्याहृतपदान्तराऽर्थाऽनन्वयित्वेनोपस्थितिविषयत्वमेव गृह्यते। 'वाप्यश्व' इत्यादौ तदन्वयित्वेनैवोपस्थितिः। अत एव'अजहत्स्वार्थायां च न दोषः। समुदायाऽर्थोऽभिधीयते'इति भाष्यं सङ्गच्छते। 'समुदायरूपोऽर्थोऽभिधाभिरुपस्थाप्यते, न तु तत्तत्पदाऽभिधया इतराऽसंसृष्टपदाऽर्थमात्रोपस्थितिरिति तदर्थः। यथा चैतत्तथा समर्थसूत्रे उपपादयिष्याम इत्याहुः'
—इति ख. पाठः। क. ग. नास्ति।

२ 'अधिश्रयणक्रियायाम्' इत्यारभ्य 'मानाऽभावात्' इत्यन्तोऽयं क. ग. पाठः।

३ 'समासतायाः शाकलसूत्रकैयटोक्तत्वेन विग्रहो नोचितः' ख. पाठः।

इति प्रकृतिभावनिषेधस्तु नाऽऽशङ्क्यः । तस्य 'इकोऽसवर्णे' इत्येतन्मात्रविषयताया उक्तत्वात् ।

अणोऽप्र । 'अण' इति किम् ? । 'कर्त्तृ' 'हर्त्तृ' । न च परणकारेणाऽणि अस्याऽप्यण्त्वमस्त्येवेति वाच्यम् । 'अप्रगृह्यस्ये'तिपर्युदासेन हलि[1] अप्रवृत्तौ, लाघवाय 'अच' इति वक्तव्येऽणूग्रहणसामर्थ्येन, पूर्वेणैवाऽणूग्रहादित्याहुः ।

अचसन्धिरिति । सवर्णसंज्ञाप्रकरणे 'सिद्धमनच्त्वादि'त्यादिभाष्यवार्त्तिकादिप्रयोगैः[2], 'अल्पाऽच्तरमि'ति सौत्रप्रयोगेण च वृत्तिघटकाऽच्शब्दे पदान्तकार्यस्य, तत्सन्निधानेन श्चुत्वस्य चाऽभावो बोध्यते । अतोऽत्र न चुत्वकुत्वे ।

## इति स्वरसन्धिप्रकरणम् ।

---

## अथ हल्सन्धिप्रकरणम् ।

स्तोरिति । सौत्रं पुंस्त्वं समाहारद्वन्द्वे इति बोध्यम् । 'श्चु'रित्यप्येवम् । 'स्' इति लुप्तषष्ठीकं, 'श्'इति च भिन्नं पदमिति केचित् । 'श्चुने'ति कर्त्तरि तृतीया, सम्बन्धिनोऽपि कर्त्तृत्वविवक्षणात् । 'विनाऽपि तद्योगं तृतीये'ति वक्ष्यमाणत्वा'त्सहयुक्ते' इत्यनेनेत्यन्ये । 'योगे' इत्यध्याहारलब्धम् । संयोगे इत्यर्थः । 'सत्या'[3] 'भीम' इतिवद् 'योगे' इत्युक्तिः । संयोगश्चाऽव्यवहितयोरेवेति 'चितं' 'कटु तैलमि'त्यादौ श्चुत्व-ष्टुत्वे न । अत एव 'चिततूलभारिषु' 'डतरादिभ्य'इत्यादिनिर्देशाः सङ्गच्छन्ते ।

अत्र'पदस्ये'त्यधिकृतमपि न सम्बध्यते, 'शादि'ति ज्ञापकात् । तेन 'याच्ञा' सिद्धा । एवमुत्तरसूत्रेऽपि । 'न पदान्तादि'ति ज्ञापकात् ।

---

१ 'हल्षु अप्रवृत्तौ' ख. पाठः ।

२ 'भाष्यवार्त्तिकप्रयोगैः' ख. पाठः ।

३ 'नामैकदेशे नामग्रहणवद् योग इत्युक्तिः'इति ख. पाठः ।

हरिश्शेते इति। 'वा शरी'ति विसर्गाऽभावे सः। विवृतत्वसाम्यात्सस्य शः। विवाराऽल्पप्राण-विवारमहाप्राण-संवाराऽल्पप्राण-संवारमहाप्राणा ऽनुनासिकानां त-थ-द्-ध-नानां तादृशा एव च-छ-ज-झ-ञा भवन्ति। एवमुत्तरसूत्रेऽपि बोध्यम्[1]।

सच्चिदिति। न च 'झलां जशोऽन्ते' 'खरि चे'ति सूत्रे अत्रैव लिखितुं युक्ते। चुत्वष्टुत्वयोरसिद्धत्वाज्जश्त्वेन दत्वे, तस्य चुत्वेन जकारे, 'तट्टीके'त्यादौ ष्टुत्वेन डकारे च[2] चर्त्वस्य प्रवृत्तेरिति वाच्यम्। उभयसूत्राऽऽकरणेनाऽपि साधयितुं शक्यत्वादित्याशय इत्याहुः।

शात्। 'तोः षी'त्यतः 'तो'रिति वर्त्तते। विश्न इति। विच्छप्रच्छोः- 'यजयाचयतविच्छप्रच्छरक्षो नङि'ति नङि'च्छ्वोः शूडि'ति शादेशे, ङित्त्वाद्गुणाऽभावः। ([3]प्रश्ने-) 'प्रश्ने चाऽऽसन्नकाले'इति निर्देशात्संप्रसारणाऽभावः। न च तत एव ज्ञापकात् श्चुत्वाऽभावस्याऽपि सिद्धौ,'शादि'ति सूत्रं व्यर्थम्। 'विश्न' इत्यर्थत्वात्।

न पदान्ताट्टोः। 'पदाट्टो'रित्येव सिद्धेऽन्तग्रहणं स्पष्टार्थम्।

टोः किमिति। षकारस्याऽपि पदान्ते जश्त्वविधानादिति प्रश्नः। 'ह्रस्वात्तादौ'ति षत्वस्याऽसिद्धत्वात्तस्य जश्त्वाऽभाव इत्युत्तराशयः।

---

१ इतोऽग्रे-'संज्ञाप्रकरणोक्तरीत्या'तथदधने'त्यादेरण्यनादितया तमादाय 'परस्मैपदानां णलि'त्यादौ सूत्राऽन्तरस्थक्रमेणेव यथासङ्ख्यप्रवृत्तिरपि सुलभेति [1]केचित्। 'चुप्रभृतिशब्दैस्तेन क्रमेणोपस्थितौ मानाऽभाव इति चिन्त्यमिद' मित्यन्ये। निमित्तकार्यिणोस्तु न तत्।'शादि'ति ज्ञापकात्। एवमुत्तरसूत्रेऽपि न। 'तोःषी'ति ज्ञापकादिति बोध्यम्' इति क. कुण्डलितः ख. पाठः। ग. तु नास्ति।

२ चकारः क. ख. नास्ति। ग. पाठः। ३ तन्त्रेण द्वयोर्निर्देशोऽत्र बोध्यः।

४ इतोऽग्रे-'निमित्तकार्यिणोर्यथासङ्ख्याऽभावज्ञापनार्थं तस्याऽऽवश्यकत्वाच्च। तट्टीकेति। तनोतीति तत्। टीकते'इति विग्रहः' ख. पाठः। क. ग. नास्ति।

---

1 'केचित्' इत्यारभ्य 'इत्यन्ये' इत्यन्तः क. पाठः, ख. नास्ति।

षण्णवतिरिति । षडधिका नवतिरिति विग्रहः ।

षण् णगर्य इति—पृथक् पदम् । संज्ञात्वे कर्मधारयो वा ।

सूत्रद्वयेऽपि 'स्तोः श्चौ श्चुः' 'ष्टौ ष्टुरि'त्येव सुवचम् । 'शात्' 'न पदान्ता-दि'तिज्ञापकेन पूर्वत्वाऽङ्गविकल'तस्मिन्नि'तिपरिभाषोपस्थित्यङ्गीकारेण, 'यज्ञ' ईट्टे 'कटुतैलं' 'चितमि'त्यादावदोषात् ।

यरो । पदान्तस्येति किम् ? । वेद्मि । स्पष्टं चेदम् 'एकादिश्चैकस्ये'ति-सूत्रे भाष्ये ।

[1]ननु 'यरो ञमि ञम्वे'त्येव सूत्र्यताम् । न च यथासङ्ख्याऽऽपत्तिः । तस्याऽसार्वत्रिकत्वात्, 'आन्महत' इत्यादिनिर्देशाच्चेति चेन्न । 'यदेतत् ॐ पठसि' ( यदेतन्ँ पठसि ) इत्यत्र तकारस्य नकाराऽनापत्तेः–'[2]अनुनासिके' इत्युक्तम् । अनितेः क्विपि सम्बुद्धौ 'आन्' 'चिनोषी' इती'त्यत्र 'नश्छवी'-ति रुत्वे'ऽत्रानुनासिक'इति .पूर्वस्याऽनुनासिके 'कमल् आँश्चिनोषी'[3]-त्यत्र लकारस्य नकाराऽऽपत्तेश्च–'[4]विधेयकोटावनुनासिक इत्युक्तम् ।

विधिकोटौ 'हयवडि'ति यकारमारभ्य प्रत्याहारे तु 'कमल् नमनं' 'वृक्षव् नेते'त्यादावान्तरतम्यान्निरनुनासिकलकारवकारयोरेवाऽऽपत्तिः ।

यदि तु यकाराऽऽ[5]दिविधानसामर्थ्यादनुनासिक एव भविष्यतीत्यु-च्यते, तर्हि संज्ञापूर्वकविधेरनित्यत्वेन क्वचित्तदभावबोधनाय तत् । तेन 'ककुब्मन्त' इत्यादौ न दोष इत्याहुरिति दिक् ।

---

१ 'ननु यरो ञमि' इत्यारभ्य 'इत्याहुरिति दिक्' इत्यन्तः क. कुण्डलितः ख. पाठः । ग. नास्ति । लघुशब्दरत्नेऽपि 'ङम ॐ' इति सूत्रे दृश्यतेऽयं पाठः ।

२ 'अनुनासिके इत्युक्त'मिति ख. नास्ति ।

३ अत्र सर्वत्र 'चिनोती'ति पाठो लेखकप्रमादात् । 'चिनोषी'त्येव पाठ इति हि भावप्रकाशे पायगुण्डे वैद्यनाथः ।

४ 'विधेयकोटावनुनासिक इत्युक्तम्' इति ख. नास्ति । क. ग. पाठः ।

५ 'वकारादि' इति ख. पाठः ।

स्पर्शे चरितार्थ इति। उपलक्षणमिदम्। वलयोरपि प्रवृत्त्यङ्गीकारात्। इदमपि जातिपक्षे। व्यक्तिपक्षे तु-प्रतिलक्ष्यं लक्षणभेदाद्रेफ[1]विषयकलक्षणस्याऽचारितार्थत्वात्तत्राऽपि प्रवृत्तिर्दुर्वारैव। जातिव्यक्तिपक्षयोश्च लक्ष्याऽनुरोधेन व्यवस्थितत्वम्। स्पष्टं चेदं'हयवरडि'ति सूत्रे आकरे[2]।

व[3]स्तुतो व्यक्तिपक्षेऽपि तादृशव्यक्तौ चरितार्थोऽस्यां व्यक्तौ न प्रवर्त्तते इति वक्तुं शक्यम्। तदुक्तम्-'इको यणची'त्यत्र कैयटेन-'द्रव्येऽपि पदार्थे उत्सर्गोऽपवादभावः संदिग्धत्वाश्रयोऽस्त्येवे'ति।

अत्र केचित्—'स्थानेऽन्तर[4]तम'सूत्रे सप्तम्यन्तपाठस्य भाष्यकृता दूषितत्वेन ईदृशयुक्तेरसम्भ[5]वः। किञ्च 'महिष्मानि'त्यादौ षस्याऽनुनासिकाऽऽपत्तिः। न चाऽस्योक्तयुक्त्या वारणम्। सूत्रमते षकारस्य स्थानप्रयत्नाऽन्तरतमऋकारसत्त्वात्। टिलोपस्याऽसिद्धत्वं तु न। मतु[6]निमित्तत्वेनोभयोः समत्वात्। जश्त्वं तु न। तस्याऽसिद्धत्वात्। मतुन्निमित्तकपदत्वं बाधित्वाऽन्तरङ्गत्वेनाऽन्तर्व[7]र्त्तिसुबन्तनिमित्तकपदत्वमेव तत्र भवति। ( पूर्वंपूर्व[8]मन्तरङ्गमि'त्यस्य तु नाऽत्र प्राप्तिरित्युक्तमेव )।

किञ्चा[9]ऽशक्त्या केनचित्प्रयुक्तस्य 'कृष् आँश्विनोषी'त्यस्यानुकरणे षस्य एतदापत्तिः। न चानुक्रियमाणरूपभङ्गापत्त्या न तत्र शास्त्रप्रवृत्तिः। 'किरश्च पञ्चभ्य' इत्यादाविट्त्वादेरप्यनापत्तेः। न चास्याऽसिद्धत्वादत्र'झलांजशोन्ते' इति स्यात्। न्यायप्राप्तजश्त्वाऽकरणप्रयुक्तोपहासेनाऽनुकरणे, तस्य कर्त्तु-

---

१ 'रेफलक्ष्यविषयक' ख. पाठः। २ 'कैयटे' इति ख. पाठः।

३ 'वस्तुतः' इत्यारभ्य 'अस्त्येवेति'इत्यन्तोऽयं क. ग. पाठः।

४ 'इति सूत्रे' ख. पाठः। क. तु इतिर्नास्ति।

५ 'असम्भवात्' ख. पाठः। ६ 'मतुब्निमित्त' इति ख. पाठः।

७ क. ग. नास्ति। ख. पाठः।

८ 'भाष्यकृता स्थापितम्' इत्यन्तः क. पुस्तके कुण्डलितोऽयं पाठः। ख. ग. नास्ति।

९ जश्त्वशास्त्रस्य अज्ञानेन हि प्रयोक्तुरुपहास इत्यर्थः।

मयोग्यत्वात्। अत एव ऋलृक्सूत्रेऽनुकरणार्थत्वम् लृकारोपदेशस्य भाष्यकृता स्थापितम्। तस्मादनुस्वारस्येति सूत्रात्सवर्णग्रहणमपकृष्य 'यरः सवर्णोऽनुनासिको भवती'ति व्याख्यानान्न दोषः। तदुक्तं भाष्ये'रेफेऽनुनासिकपरसवर्णयोः प्रतिषेधो वक्तव्यः। न वक्तव्यः। रेफोष्मणां सवर्णा न सन्ती'ति। त्वदुक्तरीत्या व्याख्याने हि 'ऊष्म'ग्रहणमत्र व्यर्थं स्यात्। तस्याऽप्रकृतत्वात्। मम तूष्मसु तद्वारणायाऽऽवश्यकेन यत्नेन रेफस्याऽपि वारणमित्याशयः। 'सवर्णा न सन्ती'त्यस्य चा'ऽनुनासिकत्वविशिष्टसवर्णो[1] नास्ती'त्यर्थं[2] इत्याहुः।

**चिन्मयमिति**। स्वार्थिकः 'तत्प्रकृतवचने मयडि'ति मयट्। अत एव 'चिन्मयं ब्रह्मे'ति सामानाधिकरण्यम्। तत्र 'तदि'ति,-वाक्यभेदेन क्वचित्प्राचुर्याऽऽदिरूपप्रकृतवचनाऽभावेऽपि मयडर्थम्। अत एव तत्र सूत्रे 'तदि'ति चरितार्थमित्यादि निरूपयिष्यामः।

**चिन्मात्रमिति**[3]–क्वाचित्कमसाम्प्रदायिकम्। मात्रचः प्रत्ययस्याऽत्रोपपत्त्यभावात्।

**निपातनादिति**। 'यवाऽऽदिगणे 'ककुद्मानि'तिप्रकृतिप्रत्ययसमुदायः पठ्यते' इति मतेनेदम्। केचित्तु 'यचिभं, तसौ मत्वर्थे' इति संहितापाठे तात्पूर्वं चर्त्त्वेन दकारं प्रश्लिष्य, भत्वेनाऽप्येतत्सुसाधम्। मृच्छब्दस्य तु यवादिगणे पाठे न मानमिति 'झय'इति वत्वे 'मृद्वानि'त्येवेत्याहुः।

**उदः स्था**। 'तस्मादित्युत्तरस्ये'ति परिभाषालभ्यमर्थमाह–उदः परयोरिति। [4]पूर्वसवर्णः स्यादिति। नन्वत्र'सवर्ण'पदमधिकम्। न च 'पर-

---

१ 'अनुनासिकत्वविशिष्टोऽनुस्वारान्तरतमश्च सवर्णो नास्ति' ख. पाठः।

२ 'नास्तीत्यर्थः। अनभिधानादिति भाव इत्याहुः' ख. पाठः।

३ 'चिन्मात्रम्' इत्यारभ्य 'उपपत्त्यभावा'दित्यन्तोऽयं पाठः ख. नास्ति। क. ग. पाठः।

४ 'पूर्वसवर्णः स्यादिति' इत्यारभ्य 'अस्मदादीनां बोध इत्याहुः' इत्यन्तोऽयं ख. ग्रन्थो लघुशब्दरत्ने श्रीनागेशभट्टैर्धृत इति क. कुण्डलितः। ग. नास्त्येव।

सवर्ण'इत्यतोऽनुवर्त्तते । तस्य 'पर'पदार्थेनैकाऽर्थीभावाऽऽपन्नत्वेनान्येनाऽन्वेतुमयोग्यत्वात्। न च स्वरितत्वप्रतिज्ञासामर्थ्यादेकदेशाऽनुवृत्तिः। 'तोर्लि'त्यत्र समुदायाऽनुवृत्त्या तस्याश्चारितार्थ्यात्।

न च 'पूर्वस्ये'त्यस्य सम्बन्ध्याकाङ्क्षायां यत्किञ्चित्सम्बन्धिकल्पनाऽपेक्षया पूर्वत्रोपस्थिताऽर्थवाचकपदाऽध्याहारस्यौचित्यात्तल्लाभः । 'चुटू' इत्यादावित्पदादेरप्येवमेव सम्बन्धोपपत्तौ, तत्र तत्र स्वरितत्वप्रतिज्ञाया वैयर्थ्याऽऽपत्तेरिति चेन्न । पकारमात्रे स्वरितत्वप्रतिज्ञयैव 'तोर्लि'त्यादावनुवृत्तिसिद्धौ, पुनः सकारांऽशे तत्प्रतिज्ञया तावतोऽप्यंशस्य पूर्वक्लृप्ताऽर्थरहितस्यैवोत्तरत्राऽनुवृत्तिबोधनान्न दोषः । शब्दाऽधिकारपक्षे तस्य स्वरितत्वप्रतिज्ञानात्तत्सदृशशब्दोच्चारणेनाऽस्मदादीनां बोध इत्याहुः ।

अत्राऽघोषस्येति । यत्तु 'अत्र श्वासविवारयोस्त्यागेन न्यूनते'ति । तन्न । समनियतत्वेनाऽन्यतमाऽग्रहणेऽपि बाधकाऽभावात् ।

थस्याऽसिद्धत्वादिति । त्रिपाद्यां परत्वादिति भावः ।

न चेदं सूत्रं व्यर्थम्। 'झलो झली'त्यनेन सस्य लोपे उत्थानस्य सिद्धत्वादिति वाच्यम् । झलादौ प्रत्यये तेन लोप इत्यर्थस्याऽनेन ज्ञापनादिति स्पष्टं 'परेश्च घे'ति सूत्रे कैयटे । न च 'उदस्थादि'त्यत्र 'यदागमा'इति न्यायेना-

---

१ 'स्वरितत्वप्रतिज्ञया तावतोऽप्यंशस्य पूर्वक्लृप्तार्थरहितस्यैव' इति क. पाठः । ग. नास्त्येव ।

२ 'तत्सदृशशब्दानुमानमत्रेत्याहुः' ख. पाठः ।

३ 'सिद्धत्वादिति वाच्यम् । पक्षे थकारद्वयश्रवणार्थत्वात् । सिचश्च तेन लोपस्याऽनेन ज्ञापनाच्चेति स्पष्टम्'—इति ख. पाठः ।

४ 'झलादौ प्रत्यये' इति ख. नास्ति । किन्तु 'सिचश्च तेन लोपस्यानेन' इति ख. पाठः ।

५ 'ज्ञापनाच्चेति स्पष्टम्' ख. पाठः ।

ऽङ्विशिष्टस्य स्थात्वात्पूर्वसवर्णाऽऽपत्तिः । निर्दिश्यमानपरिभाषया वारणात् । 'आदेः परस्ये'त्यनेन निर्दिश्यमानाऽऽदेरेव स्थानिवत्त्व-बोधनम्। स्पष्टं चेदं 'पादः पदि'त्यत्र भाष्ये ।

ननु 'उत्पूर्वत्वे स्कन्देश्छन्दस्युपसङ्ख्यानम् । 'अघ्न्ये दूरमुत्कन्द' । 'रोगे चेति वक्तव्यम्'। उत्कन्दो रोग'इति भाष्यं विरुध्येत। अग्रिम-वार्त्तिकस्याऽऽरम्भसामर्थ्येन लोकेऽपि प्रवृत्तेरिति चेन्न ।

भाष्योदाहरणप्रामाण्येन 'ने'ति योगविभागेनाऽसिद्धत्वस्य तत्र बाधेना-ऽदोषात् । वक्ष्यमाणभाष्यकारीयन्यासरीत्या थस्याऽसिद्धत्वाऽभावेन, वृत्तिसंमतपाठेऽप्युक्तरीत्यादर आवश्यक इति सर्वत्र चर्त्वं भवत्येवेति वस्तुतत्त्वम्[२]।

झय इति पञ्चमीत्याशयेनाऽऽह—झयः परस्येति। 'उदः स्थे'ति सूत्रा-'त्पूर्वस्ये'ति, 'सवर्ण'ग्रहणं चाऽनुवर्त्तते । तदाह—पूर्वसवर्णेति ।

यदि तु 'हस्य सवर्ण'इत्येवोच्येत, तदा'रेफोष्मणां सवर्णा न सन्ती'ति हस्य ह एव स्यात्। एवं च वचनवैयर्थ्याऽऽपत्त्या तत्सामर्थ्यात्पूर्वग्रहण-स्याऽपि स्वरितत्वं कल्पते ।

'अन्यतरस्यामि'त्यखण्डो निपातो विकल्पाऽर्थः। सूत्रे 'वे'ति वक्तव्ये गुरूच्चारणं व्यर्थमिति न शङ्क्यम्। पर्याये लाघवगौरवाऽनादरणात्।

घोषवतो नादवत इति । समनियतत्वेऽपि विनिगमनाविरहात्, स्वरूपप्रतिपादनाय च त्रितयग्रहणमित्याहुः। झय इति । 'पदान्तादि'त्यपि बोध्यम्। तेन'विरप्शमि'त्यादौ लोकेऽपि च्छत्वं नेति स्पष्टमाकरे ।

---

१ भाष्ये तु 'उत्कन्दको रोगः' इत्येव पाठः ।

२ इतोऽग्रे–'तस्य चयो द्वितीया'इति तु न । चर्त्वस्याऽसिद्धत्वात् । मूलं तु प्राचामनुरोधेनेति दिक् । नाज्झलाविति निर्देशात् झय इति पञ्चम्येवेत्याशये-नाह' इति ख. पाठः । क. ग. तु नास्ति ।

चकार इति । पूर्वं 'शश्छोटी'त्यस्य लेखनेऽपि, चर्त्वदृष्टया तस्याऽसिद्धत्वा'च्चर्त्वोत्तरं छत्वमि'ति प्रक्रिया बोध्या ।

वस्तुतस्तु 'जकारे कृते'[1] इत्यस्य 'छत्वमि'ति शेषः । 'दीर्घादाचार्याणामि'त्युत्तरम्–'अनुस्वारस्य ययि', 'वा पदान्तस्य', 'तोर्लि', उदःस्थास्तम्भोः'-'झयो हो', 'शश्छोटी'ति षट्सूत्रीपाठोत्तरं, 'झलां जश् झशि', 'अभ्यासे चर्च', 'खरि च', 'वाऽवसाने' 'अणो प्रगृह्यस्ये'ति पञ्चसूत्र्याः पाठस्य भाष्यसंमतत्वेन, चर्त्वस्य च्छत्वं प्रत्यसिद्धत्वादित्याहुः ।

यत्तु[2] तदो 'वाऽवसाने'इति चर्त्वे, ततो 'झलां जशोऽन्ते'इति जश्त्वे, ततः शिवशब्दसम्बन्धे, 'खरि चे'तिचर्त्वे, श्चुत्वे' 'शश्छोटी'ति प्रक्रियेति । तन्न । जश्त्वं प्रत्यवसाने चर्त्वस्याऽपवादत्वेन,[3] तत्र कृते भ्रष्टाऽवसरन्यायेन जश्त्वाऽप्रवृत्तेः । अन्यथा चर्त्वशास्त्रवैयर्थ्यं स्यात् ।

न च जश्त्वे कृते चर्त्वस्य चारितार्थ्येन, तस्याऽसिद्धत्वादपवादत्वे न मानमिति वाच्यम् । तत्कालेऽवश्यं तस्य प्राप्तत्वेन, तदप्राप्तिविषये चारितार्थ्याऽभावमात्रेण येन नाप्राप्तिन्यायेनाऽपवादत्वस्य सुलभतया, उक्तयुक्तेरसम्भवात् ।

एतदेवाऽभिप्रेत्य मिदचोन्त्यात्सूत्रे भाष्ये उक्तं-'सत्यपि सम्भवे बाधनं भवती'ति । अन्यथा 'कौण्डिन्याय तक्रमि'त्यनेन 'ब्राह्मणेभ्यो दधी'ति प्राप्तदधिदानस्याऽपि बाधो न स्यात् । तद्दानोत्तरं,[4] तत्पूर्वं वा तद्दानस्य चारितार्थ्यात् । 'दयतेर्दिगी'ति सूत्रस्थकैयटादिग्रन्थास्तु[5] प्रौढ्येति स्पष्टमेव ।

---

१ 'कृते' इति ख. नास्ति ।

२ 'यत्तु' इत्यारभ्य 'चर्त्वस्यासिद्धत्वादिति दिक्'इत्यन्तः क. कुण्डलितोऽयं ख. पाठः । ग. नास्ति । मनोरमाशब्दरत्नयोश्चाऽयं ग्रन्थो दृश्यते ।

३ 'स्याप्यपवादत्वेन' ख. पाठः ।

४ 'दानोत्तरं' ख. पाठः । ५ 'सूत्रस्थाऽऽकरग्रन्थास्तु' ख. पाठः ।

किञ्चैवं सति 'पादोऽन्यतरस्यामि'त्यस्य 'टाबृची'त्यपवादो न स्यात् । तस्य वैकल्पिकत्वेन तदभावपक्षेऽस्य चारितार्थ्यात्। अत[1] एव 'अजादेर्द्वितीयस्ये'तिसूत्रे प्रथमद्विर्वचनोत्तरमस्य चारितार्थ्येन प्रथमद्विर्वचनस्याऽनेन बाधो न स्यादित्याशङ्क्य 'सत्यपि सम्भवे'इति न्यायेन बाध[2]कत्वमुक्तं भाष्ये ।

किञ्चैवमपि तदो दान्तत्वेन, जश्त्वोपन्यासो विफलः । चर्त्वस्याऽसिद्धतया, जश्त्वोत्तरं चर्त्वोपन्यासस्यैव युक्तत्वाच्च । भाविन्यवसानभङ्गे 'वाऽवसाने' इत्यस्याऽप्रवृत्तेश्च । 'चर्त्वे कृते चुत्वं'[3]मित्यपि न न्याय्यम् । चुत्वं प्रति चर्त्वस्याऽसिद्धत्वादिति दिक् ।

**मोऽनुस्वा** । 'पदस्ये'त्यधिकृतं 'म'इत्यनेन विशेष्यते इत्याह—**मान्तस्येति**। 'हलि सर्वेषामि'त्यतो 'हली'त्यनुवर्त्तते । हलि किम् ? । त्वमत्र ।

**नश्च** । चेन मोऽनुकृष्यते इत्याह—**नस्य मस्य चेति** । अपदान्तस्य किम् ? । राजन्पाहि । **यशांसीति** । यशस्शब्दे जसः शौ, 'नपुंसकस्ये'ति नुमि, 'सान्ते'ति दीर्घः । आक्रंस्यते इति । क्रमेर्लृट् । 'आङ उद्गमने' इति तङ् । स्यः । आत्मनेपदित्वादिडभावः ।

**अनुस्वारस्य** । 'ययी'ति किम् ? । 'दंशनमि'त्यत्र शकारसवर्णस्य दीर्घेकारस्याऽनुनासिकस्य प्रसक्तेः । 'नाऽऽज्झलावि'ति निषेधस्तु न दीर्घशकारयोः । प्रयत्नभेदाऽऽश्रयेण सावर्ण्याऽभावाऽङ्गीकारे तु प्रयोजनं चिन्त्यम् । अचि अनुस्वारस्यैवाऽभावात् । शल्सवर्णी अनुस्वाराऽन्तरतमो नाऽस्त्येवेत्याहुः ।

**मो राजि** । न च 'न राजी'त्येवोच्यताम् । अनुस्वारनिषेधेनैवेष्ट-

---

१ 'अत एव' इत्यारभ्य 'उक्तं भाष्ये' इत्यन्तोऽयं क. पाठः । ख. ग. नास्ति ।

२ 'बाधकमुक्तं भाष्ये' इति क. पाठः ।

३ 'चुत्वमपि न न्याय्यम्' ख. पाठः ।

सिद्धेरिति वाच्यम्। 'हे मपरे'[1]इतिसूत्रविषये 'प्रशाम् ह्मलयती'त्यादौ 'मो नो धातो'रिति नत्वबाधनार्थत्वात्। निषेधो ह्यनन्तरस्येति न्यायेनाऽनुस्वारस्यैव स्यात्। ध्वनितं चेदम्'एतदोऽनि'ति सूत्रे भाष्ये, अमो मश्' इति सूत्रे च। तत्र हि 'मो राजी'ति अनुस्वाराऽऽदिबाधनाऽर्थमि'त्युक्तमित्याहुः।

**हे मपरे**। 'मपरे' इति बहुव्रीहिः, न तु पञ्चमीतत्पुरुषः[2], असम्भवात्। 'मोऽनुस्वार' इत्यतो 'म' इत्यनुवर्त्तते। तदाह—**मस्येत्यादि**। 'पर'ग्रहणं समुच्चयवारणाऽर्थम्। 'अहरहर्नयमानो गामश्वं पुरुषं पशुमि'त्यादौ 'च'शब्द विनाऽपि समुच्चयदर्शनात्।

**यथासङ्ख्य**। सम्यक् ख्यानं सङ्ख्या[3]। क्रमवैशिष्ट्येन ज्ञानम्। 'यत्साङ्ख्यैः प्राप्यते स्थानमि'त्यादौ 'सङ्ख्या'शब्दस्य ज्ञानाऽर्थताया दृष्टत्वात्। तमनतिक्रम्य—यथासङ्ख्यम्। अनुदेशः–पश्चाद्भववाक्याऽर्थबोधकालिकः सम्बन्धः।

**समानामिति**। साम्यं–सङ्ख्यया योग्यत्वाद्, व्याख्यानाच्च। तथा च– 'समसङ्ख्यानां सम्बन्धो यथाक्रममि'त्यर्थः। येन क्रमेण पदज्ञानं, पदादुपस्थितिर्वा, तेनैव क्रमेण वाक्याऽर्थबोधविषयः सम्बन्धस्तेषामिति भावः।

एतेन 'समकर्मकं विधानमि'त्यपास्तम्। अनुवाद्ययोरपि अस्येष्टत्वात्[4]। 'समूलाऽकृतजीवेषु हन्कृञ्ग्रह'इत्यत्र यथा।

तत्फलितमाह—**समसम्बन्धीति**। यद्यपि स्थानाऽऽख्यलौकिक-

---

१ 'हे मपरे' इति सूत्रविषये' इति क. ग. पाठः।

२ 'तत्पुरुषोऽयम्' ख. पाठः।

३ 'सम्यक् संख्यानं सङ्ख्या' इति क. पाठः। 'संख्यानं सङ्ख्या' ख. ग. पाठः।

४ 'यथासङ्ख्यस्येष्टत्वात्। यथासङ्ख्यस्येति व्यान्तैकदेशेन सूत्रग्रहणं बोध्यम्' इति ख. पाठः। क. कुण्डलितः। ग. नास्ति।

प्रमाणादेव सिद्धं, तथाऽपि 'परस्मैपदानामि'त्यादौ शब्दतः सूत्राऽन्तरस्थ-क्रममादाय सम्बन्धबोधनाऽर्थं[1] सूत्रम् । किञ्च 'आद्यन्तौ टकिता'वित्यादौ समासनिर्देशे साहित्ये द्वन्द्वविधानादप्राप्त-क्रमाऽन्वयबोधनार्थम्[2] । द्वन्द्वस्तु प्राथमिकबोधमादाय साधुः, द्वितीय-क्रमिकबोधार्थमिदं सूत्रम् । एवञ्च[3] तत्र यथासङ्ख्येनान्वयबोधकवाक्यकल्पना एतत्प्रामाण्यात्, ततश्च बोध इति बोध्यम् ।

अत्र 'स्वरितेने'त्यपकृष्यते । तेन[4] 'ख्यत्यादि'त्यादौ न दोषः ।

सङ्ख्यासाम्यं च वाचकशब्दकृतं बहुधा । यथा 'स्यतासी लृलुटो-रि'त्यत्र । क्वचिदर्थकृतमपि 'परस्मैपदानामि'त्यादौ । अतिप्रसङ्गभङ्ग-स्त्वस्वरितत्वाद्बोध्यः ।

तत्र प्रतिपत्तिकालिकमेव सङ्ख्यासाम्यमेतच्छास्त्रप्रवृत्त्युपयोगि, न तु लक्ष्यसंस्कारवेलायामपि तदपेक्षेति 'ञमङ्णनमि'ति सूत्रे भाष्ये स्पष्टम् ।

ङ्णोः । कुक्टुकोः पूर्वाऽन्तत्वात् 'प्राङ्क् साये'इत्यत्र 'सात्पदाद्यो'रिति षत्वं न । 'सुगण्ट् साये' इत्यत्र 'न पदान्ताट्टो'रिति ष्टुत्वं न ।

चयो द्वितीया इति । 'नादिन्याक्रोशे' इति सूत्रे भाष्ये पठितमिदम् । पौष्करसादिः–आचार्यः । सुगण्ठ् षष्ठ इति । न च ठकारे कृते तस्य चर्त्वं दुर्वारमिति वाच्यम् । 'चयो द्वितीया' इत्यस्य वैयर्थ्याऽऽपत्तेः[5] ।

---

१ 'शब्दतः सूत्रान्तरस्थमर्थतोऽत्रोपस्थितं क्रममादाय' ख. पाठः ।

२ 'बोधनार्थमिदं सूत्रम्' ख. पाठः ।

३ 'एवं च' इत्यारभ्य 'इति बोध्य'मित्यन्तोऽयं क. ग. पाठः ।

४ 'तेन ख्यत्यादित्यादौ न स्थानाख्यलौकिकप्रमाणस्यापि प्रवृत्तिः । अपकर्ष-सामर्थ्यादित्याहुः'–ख. पाठः ।

५ 'वैयर्थ्यापत्तेः । न च 'ऊष्मोदयं प्रथमं स्पर्शमेके द्वितीयमाहुरपदान्तभाज-मि'ति प्रातिशाख्यविरोधात्कथमत्र'चयो द्वितीया' इत्यस्य प्रसक्तिः । 'ऊष्माण उदयाः = परे यस्य तादृशं स्पर्शं द्वितीयमाहुः, पदान्तभिन्नमि'ति हि तदर्थः ।

न चाऽत्र 'चयो द्वितीया' इत्यस्याऽसिद्धत्वा'ज्झलां जशः' इति जश्त्वे, चर्त्वे, तस्याऽसिद्धत्वात्कथमत्र 'चयो द्वितीया' इत्यस्य प्राप्तिः। एतन्मूलकमेव—'ऊष्मोदयं प्रथमं स्पर्शमेके द्वितीयमाहुरपदान्तभाजमि'ति प्रातिशाख्यम्। ऊष्माण उदये = परे यस्य तादृशं स्पर्शं द्वितीयमेके = व्याकरणवार्त्तिककारा—आहुः पदान्तभिन्नमिति हि तदर्थ इति वाच्यम्। एषामागमानां जश्त्वं प्रत्यसिद्धत्वेन तदप्राप्तेः। तदाह—कुक्टुकोरिति। अत एव भाष्ये 'अप्सराः' 'वथ्साः' इति अस्योदाहरणं दत्तम्।

---

प्रकृते च पदान्तत्वं स्पष्टमेवेति वाच्यम्। 'प्रातिशाख्यमि'ति समाख्याबलेन तस्य च्छन्दोमात्रविषयत्वात्। 'लिट्सु' इत्यादौ तु चर्त्वस्याऽसिद्धत्वाद् द्वितीयस्य प्राप्तिरेव न'—इति ख. पाठः।

१ 'नचाऽत्र' इत्यारभ्य 'तदाह-कुक्टुकोरिति' इत्यन्तः क. ग. पाठः।

'अत एव भाष्ये'ऽप्सरा' इति,-अस्योदाहरणं दत्तम्। तत्र हि 'अप्सु सरन्ती'त्यर्थेऽप्पूर्वात्सर्त्तेरसिर्विहित इति पकारस्य पदान्तत्वं स्पष्टमेवेत्याहुः।

अन्ये तु 'वथ्सा' 'अफ्सरा' इत्युदाहरणद्वयमस्य भाष्ये दत्तम्। तत्राऽऽद्ये वदेः सः, द्वितीये तूक्तमेव। एवञ्चोभयत्राऽपि चर्त्वेनैव चयः सत्त्वेन, चर्त्वस्याऽसिद्धत्वात्कथमस्य प्राप्तिः। तस्मादव्युत्पत्तिपक्षाऽभिप्रायेणेदमुदाहरणद्वयम्। यद्वा छान्दसमत्रोदाहरणमिदम्। छान्दसत्वाच्च चर्त्वाऽसिद्धत्वं न, नेति योगविभागादत्र चर्त्वस्याऽसिद्धत्वाऽभावो वेत्याहुः'।

इति तु ख. पाठः।

'यत्तु भाष्ये 'अफ्सरा' 'वथ्सा' इति अस्योदाहरणं दत्तम्। तत्र हि अप्सु सरन्तीत्यर्थेऽप्पूर्वात्सर्त्तेरसिर्विहितः। अन्ये वदेः सः। एवञ्च यद्यपि चर्त्वेनैव चयः सत्त्वेन चर्त्वस्याऽसिद्धत्वात्कथमस्य प्राप्तिः, तथापि अव्युत्पत्तिपक्षाभिप्रायेणेदमुदाहरणद्वयम्। यद्वा छान्दसमत्रोदाहरणमिदम्। छान्दसत्वाच्चर्त्वाऽसिद्धत्वं न'—इति तु ग. पाठः।

डः सि । 'ड' इति पञ्चमी, व्याख्यानात् । 'पदस्ये'ति वर्त्तते । 'डकारात्परः सकारे परे पदस्य धुट्' इति वाक्याऽर्थः । तत्र पञ्चमी-सप्तम्यर्थाऽनुग्रहाय धुट् पराऽऽदिरेव । एवमग्रेऽपि । 'डात्सस्ये'त्यादि तु फलिताऽर्थकथनमित्याहुः । तन्न[1] । परस्ये'त्यादेः षष्ठ्यन्तस्यैव[2] उपस्थित्या तथाऽन्वयाऽसम्भवात् । अत एव 'तस्मिन्नि'तिसूत्रभाष्यादौ 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयानि'त्यादिर्यत्न आस्थितो 'रुधादिभ्यः सार्वधातुके' इत्यादौ पराऽऽदित्वसिद्धये । 'तस्मिन्नि'तिसूत्राऽपेक्षया 'तस्मादि'त्यस्य परत्वादिति[3] हि तस्याऽर्थः ।

'डकारात्सकारे (परे[4])धु'डित्यर्थे 'तस्मिन्नि'त्यस्य प्रवृत्तावुपस्थितडकारस्याऽऽगमित्वम् , 'तस्मादि'त्यस्य प्रवृत्तावुपस्थितसकारस्याऽऽगमित्वमिति विरोधे[5] परत्वेन व्यवस्थेति सकारस्याऽऽगमित्वनिर्णयः । एवं च पञ्चमी

---

१ 'तन्न । विधेयस्याऽविद्यमानत्वेन तद्विशेषणाऽयोगात्' इति क्वचित्कोऽयं पाठः । क. पुस्तके स्वयं लिखितोऽपि मसीलेपेन दूरीकृतः । ख. ग. तु नास्त्येव ।

२ 'षष्ठ्यन्तस्यैव परिभाषाभ्यामुपस्थापनेन तथाऽन्वयाऽसम्भवात् । स्पष्टं चेदं 'परश्चे'तिसूत्रे भाष्ये' इति ख. पाठः ।

३ 'परत्वादिति हि तस्यार्थः । एवञ्च डकारात्परस्य सकारे सति धुडित्यर्थे परः क इत्याकाङ्क्षायां श्रुतः सकार एव गृह्यते । 'तस्मिन्नि'त्यस्य प्रवृत्तौ तु सकारे परे पूर्वस्य धुडित्यर्थः स्यात्,—इति द्वयोर्विरोधे 'तस्मादि'त्यस्या एवोपस्थानम् । एतेन डकारात्परस्य सकारे पूर्वस्येत्यर्थे षट् त्सरुरित्युदाहरणसम्भवाद्विरोधाऽभावेन कथं परत्वेन व्यवस्थेत्यपास्तम् । श्रौतस्थानिलाभायान्यतरपरिभाषाबाधस्यौचित्यात् । वस्तुतो नाऽत्र बाधः, किन्त्वप्रवृत्तिरेव । एवञ्च पञ्चमी स्वार्थे'—इति च. पुस्तकपाठः ।

४ क. ग. नास्ति । ख. पाठः ।

५ 'मिति विरोधे उभयोः प्रवृत्तावुपस्थितवर्णद्वयपरित्यागेन 'षट् त्सर'इत्यादावनुपस्थितस्याऽन्यस्याऽऽगमित्वं कल्प्यमिति परत्वेन व्यवस्थे'ति, इति ख. पाठः ।

स्वार्थेऽऽवस्थिता। 'सीति सप्तमी तु षष्ठ्यर्थे' इति फलितम्। तदाह—सस्येति।

न च 'ड' इत्यस्य सन्दिग्धत्वेन, 'सी'त्यस्याऽसन्दिग्धत्वेन विपरीतमुचितम्। तस्याऽपि लाघवाऽर्थत्वेन सन्दिग्धत्वात्।

'पदस्ये'ति वर्त्तमानं वैयधिकरण्येन सम्बध्यते।[1]

नन्वेवमपि 'धुक् डः सी'त्येव सूत्रमस्तु। सप्तमी च यथाश्रुतैवाऽस्तु। 'ड'इति च षष्ठ्यन्तम्। परमाऽर्थतो वाक्यशक्त्यङ्गीकारेण पूर्वान्तत्वे, पराऽऽदित्वे वा न शक्तताऽवच्छेदकभेदः। ( अवग्रहे[2] संहिताऽभावाद् धुडाद्यभावेन, तत्राऽपि न विशेषः ) इति चेन्न। 'षट्त्सन्त' इत्यत्र ष्टुत्वाऽऽपत्तेः। पदान्तटवर्गाऽभावेन निषेधस्याऽप्राप्तेरिति दिक्।

षट् त्सन्त इति। धुटि, धस्य चर्त्त्वे, डस्य चर्त्त्वम्। न चैवं 'लक्ष्ये लक्षणस्ये'ति न्यायेन धस्य चर्त्त्वे, डस्य तद् दुर्लभम्। चर्त्वस्य हि धकारसकारौ, डकारतकारौ चेत्येव लक्ष्यं, नाऽधिकम्। मानाऽभावात्। एवं च लक्ष्यभेदान्न क्षतिः।

एतेन 'ञ्चछा, ञ्चशा'इति व्याख्यातम्। चर्त्वस्याऽसिद्धत्वा'च्छयो द्वितीया'इति न। अत[3] एव 'डः सि तुडि'ति नाऽसूत्रि।

'श्चुत्वं धुटि सिद्धं वाच्यम्'। अटतीत्यट् श्चोतति। इह धुण्न।

नश्च। नकारान्तादिति। 'पदस्येत्यनुवृत्तं पञ्चम्या विपरिणम्यते इति भावः। वैयधिकरण्येनैवाऽन्वय इति'ङमुट्'सूत्रस्थभाष्यस्वरसः[4]।

---

१ 'वर्त्तमानं विभक्तिविपरिणामेन'ड'इत्यनेन सम्बध्यते, न सकारेण, ढकारात्परस्य सकारान्तस्याऽसम्भवात्, भाष्योदाहरणाऽसङ्गतेश्चेत्याहुः' इति ख. पाठः। २ क. ग. नास्ति। ख. पाठः।

३ 'अत एव वक्ष्यमाणस्तुगिहैव न कृतः। ष्टुत्वापत्तेश्चेति दिक्' ख. पाठः।

४ इतोऽग्रे 'ङमो ह्रस्वादि'त्यत्र सम्बन्धस्यावश्यकत्वेन मध्येऽपि सम्बन्धस्यैवौचित्यात्' इति च. पाठः।

शि तुक् । 'न'इति पञ्चम्याः पूर्वसूत्रे चरिताऽर्थतया, 'शी'ति सप्तम्य-नुरोधादत्र षष्ठ्या विपरिणामः । द्वयोरचरितार्थत्वे हि लाघवाऽनुरोधेन निरर्थकविभक्त्युच्चारणं युक्तमित्याशयेनाऽऽह—[1]नस्येति ।

( न च 'कुर्वन् चशेते'इत्यत्र णत्वं स्यात्[3] । 'स्तोः श्चुने'ति सूत्रे 'श्चुने'ति योगं विभज्य, 'ने'ति,'ण'इति चाऽनुवर्त्त्य निषेधेन भाष्ये समाहितत्वात् । एतद्दृष्ट्या 'श्चु'रित्यस्याऽसिद्धत्वं तु वचनसामर्थ्यान्न । इदं च नकारा-ऽर्थमेव । सग्रहणं, शग्र[4]हणं, वर्गग्रहणं चोत्तरार्थम् । ततः'श्चु'रिति । पूर्व-सूत्रमनुवर्त्तते । कार्यकालपक्षे बहिरङ्गतया तुकोऽसिद्धत्वाच्च ) ।

'नस्य पदान्तस्ये'ति क्वाचित्कोऽपपाठः । 'नान्त[5]स्य पदस्ये'ति सामानाधिकरण्यस्योचितत्वात् । 'अलोऽन्त्य'परिभाषाऽप्रवृत्त्या 'ससजुषो रु'रितिवत्फलिताऽर्थकथनत्वस्याऽप्यभावात् । वैयधिकरण्ये तु 'पदाऽवय-वस्य नस्ये'त्येव लभ्यते, न तु 'पदान्तस्ये'ति ।

अपदान्तनकारेऽनुस्वारप्रवृत्त्या यथाकथञ्चित्फलितार्थकथनपरतया वा नेयः[6] ।

ननु धुटमेवाऽनुवर्त्त्य, 'सी'ति साहचर्यात् 'शी'ति सप्तम्यपि षष्ठ्यर्थे व्याख्येया, षष्ठ्यन्तमेव वा 'श'इति पाठ्यमित्याशङ्क्याऽऽह–शश्छोटीति । अन्यथा पदान्ताज्झयः परत्वाऽभावान्न स्यात् । विर[7]प्शमि'त्यादौ छत्वा-ऽभावाय 'पदान्तादि'ति तत्राऽऽवश्यकमिति स्पष्टमाकरे ।

---

१ इतोऽग्रे 'नान्तस्य पदस्येति ( ना )र्थः'–इति च. पुस्तकपाठः ।

२ क. कुण्डलितोऽयं ख. पाठः । प्रौढमनोरमायामपि चाऽयं दृश्यते ।

३ 'पदान्तस्ये'तिणत्वनिषेधाऽप्रवृत्त्या'इति शेषः ।

४ 'शग्रहणम्' इति क्वचिन्न ।

५ 'नान्तस्य पदस्ये'ति क. ग. पाठः ।

६ 'अपदान्त'इत्यारभ्य 'वा नेयः'इत्यन्तः क. ग. पाठः । ख. नास्ति ।

७ 'लोके विरप्शमित्यादौ' ख. च. पाठः ।

चतुष्टयमिति । चुत्व-तुकोरिव च्छत्वस्याप्यसिद्धत्वा'न्नश्छवी'ति रुत्वं न । यत्तु तुकश्चुत्वे छत्वस्याऽसिद्धत्वा'च्चयो द्वितीया'इति पक्षे चस्य च्छत्वेन छकार-शकारघटितरूपद्वयवृद्धेश्चिन्त्यमिदमि'ति । तन्न । वक्ष्यमाण-विकल्पैश्चतुष्टयत्वस्याऽभिमतत्वेन क्षत्यभावात् । अत एवोत्तरार्द्धे तदुक्तिः । अत एव ञकार-छकार-शकारा-ऽनुस्वार-विसर्गाऽऽदीनां द्वित्वविकल्पेना-ऽऽधिक्येऽपि न क्षतिः ।

यत्तु 'तुकि, तकारस्य पदान्तत्वाच्चुत्वस्याऽसिद्धत्वेन जश्त्वे, ततश्चु-त्वेन जकारे, तस्य 'खरि चे'ति चर्त्वे ह्ययं चकारः । तत्र चर्त्वस्याऽसिद्धत्वा-'च्चयो द्वितीया' इत्यस्य प्राप्तेरेवाऽभावाद्यत्किञ्चिदेतदिति । तन्न । तुको जश्त्वं प्रत्यसिद्धत्वा[2]दिति दिक् ।

ङमो ह्रस्वात् । '[3]मय उञो व'इत्यत्र वाग्रहणादेवास्य नित्यत्वे सिद्धे, पुनर्नित्यग्रहणं स्पष्टार्थम् । न[4] च विकल्पद्वयमध्यपाठेनैव नित्यत्वकल्पने, तन्मध्यपाति-'नश्चे'त्यादीनामपि नित्यताऽऽपत्तिरिति वाच्यम् । स्वरितत्व-बलादनुवृत्तस्य पुन'र्वा'ग्रहणसामर्थ्यान्निवृत्तौ कल्प्यमानायां, स्वाऽनन्तर एव तत्कल्पनेनोपपत्तावन्यत्र तत्कल्पने मानाऽभावा[5]दित्याहुः ।

---

१ 'छकार-छकार-छकार-शकारे'ति क्वचित्पाठः । स च क. पुस्तके मसीलेपेन निराकृतः । ख. च. ग. पुस्तके तु स पाठो वर्त्तते एव ।

२ 'तुको जश्त्वं प्रत्यसिद्धत्वात् । अतोऽपि धुडनुवृत्तिः कर्त्तुमशक्येति दिक्'– इति ख. च. पाठः । क. कुण्डलितः । ग. नास्ति ।

३ 'ह्रे मपरे' इति 'मय उञो वो वा' इति च विकल्पद्वयमध्ये पाठादेव नित्यत्वे सिद्धे' इति ख. च. पाठः ।

४ 'न च'इत्यारभ्य 'इत्याहुः'इत्यन्तः लघुशब्दरत्ने धृतोऽयं ग्रन्थ इति क. पुस्तके कुण्डलितः । ग. नास्त्येव । ख. तु वर्त्तते ।

५ इतोऽग्रे–'तस्मादुत्तरत्र 'मय उञो वो वे'त्यत्र वाग्रहणसामर्थ्याद्व्यवहितपूर्व-सूत्रे एव वाग्रहणस्य निवृत्तिरिति भावः' इति लघुशब्दरत्नेऽधिकः पाठः ।

यद्यपि[1] 'पदस्ये'तिषष्ठ्यन्तमनुवृत्तं[2] पञ्चम्यन्त'ङम'इत्यनेन सामानाधिकरण्याऽसम्भवादवयवत्वसम्बन्धेन विशेषणम् । मण्डूकप्लुत्या 'पदे' इत्यनुवृत्तेश्चा'ऽजादेः पदस्ये'त्यर्थः । तेन 'दण्डिने'त्यादौ नाऽतिप्रसङ्गः ।

न च 'पदस्ये'त्यधिकारेणैव 'नेड् वशि कृती'त्यादाविवाऽजादेः पदस्ये'त्यर्थसम्भवेन 'पदे' इत्यनुवृत्तिर्व्यर्थेति वाच्यम् । विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्वे एव 'यस्मिन्विधि'रित्यस्य प्रवृत्त्या तथाऽर्थाऽलाभात् । अत एव 'लिट्त्सु' इत्यादौ धुडादिसिद्धिः । अन्यथा सादेः पदस्यैव स्यात् । स्पष्टं चेदं भाष्ये । तथापि[3] वैयधिकरण्याऽपेक्षया विभक्तेर्लक्षणया सामानाधिकरण्यमुचितम् । तदेतत्फलितमाह—पदं तस्मादिति ।

वस्तुतो विभक्तिविषयनियमवैयर्थ्याऽऽपत्त्या विभक्तेर्लक्षणयाऽसाधुत्वाद्व्यत्ययकल्पनाऽपेक्षया भाष्योक्तं वैयधिकरण्यमेव न्याय्यम् । 'अची'ति सप्तम्याः 'ङम'इति पञ्चम्या षष्ठ्यर्थकत्वम् । सप्तमीनिर्देशस्तु लाघवार्थः, उत्तरार्थश्च, 'यस्मिन्विधिरि'ति प्रवृत्त्यर्थश्च । स्पष्टं चेदं 'तस्मिन्नि'तिसूत्रे भाष्ये ।

ननु[4] 'ङम'इत्यस्य षष्ठ्यन्तत्वमाश्रित्य 'ङमन्तं यत्पदं तदवयवस्य ह्रस्वात्परस्य ङमो ङमुडजादौ पदे'इत्यर्थोऽस्तु । 'पदस्ये'ति च 'मादुपधाया' इतिवदवयवषष्ठी[5] । 'अजादौ पदे'[6] इत्युक्ते'मनन्नि'त्यादावनन्त्यस्य न ।

---

१ 'यद्यपि'इति ख. च. नास्ति ।

२ 'अनुवृत्तमपि पञ्चम्यन्त' ख. च. पाठः ।

३ 'तथापि' इत्यस्य स्थाने 'वस्तुतः' इति ख. च. पुस्तकयोः पाठः ।

४ ननु 'ङम' इत्यारभ्य 'इत्याहु'रित्यन्तः ख. च. पाठोऽयं, प्रायो मनोरमाशब्दरत्नयोः स्थितत्वात् क. कुण्डलितो, ग. नास्ति ।

५ 'अवयवषष्ठीति चेन्न । कुर्वन्नास्ते' इति क. पाठः । 'अवयवषष्ठी । ह्रस्वात्परश्च प्रत्यासत्त्या उपस्थितङमेवेति चेन्न' च. पाठः ।

६ 'अजादौ पदे'इत आरभ्य 'रूपम्'इत्यन्तः पाठः क. ग. पुस्तकयोर्नास्ति ।

